॥ श्री ॥

॥ श्रीगणेशाय नमः ॥

श्रीमन्महाभारतवनपर्वान्तर्गतम्,

# ॥ हरिश्चन्द्रोपाख्यानम् ॥



सटिप्पणम्

इदं
कुंभघोणनिवासिना,
रा. सुदर्शनशर्मणा, साहित्यशिरोमणिना,
यथामति संशोध्य स्वकृतलघुटिप्पण्या सह

कुंभघोणस्थ
"श्रीविद्या" मुद्राक्षरशालायाम्
मुद्रापयित्वा प्रकाशितम् ।

Edited & Published
BY
R. SUDARSANA SARMA, SAHITYA SIROMANI,

PRINTED AT THE
"SRI VIDYA" POWER PRESS,
KUMBAKONAM



Price Rs. 1—8—0.] 1935. [Postage Extra.]

॥ श्रीः ॥

# ॥ उपोद्घातः ॥

## ॥ हरिश्चन्द्रोपाख्यानम् ॥

सत्यसन्धस्य हरिश्चन्द्रस्योपाख्यानं श्रीमन्महाभारतवनपर्वान्तर्गतमिति संप्रदायः। परंतु मुद्रितभारतपुस्तकेषु क्वापि तन्नोपलभ्यते। श्रीमद्भ्व. टी. आर्. कृष्णाचार्यैः मुद्राप्य प्रकाशिते भारतपुस्तके वनपर्वणि नलोपाख्यानपर्वणि ७७-तमे अध्याये षोडशश्लोकात्मकमिदमाख्यानं अधिकपाठतया दृश्यते॥

३३-अध्यायात्मकं हरिश्चन्द्रोपाख्यानमतिप्राचीनं किमपि लब्धमस्माभिः। "मार्कण्डेय उवाच, इति श्रीमन्महाभारते वनपर्वणी"त्यादि पर्यालोचनया आख्यानमिदं श्रीमन्महाभारते वनपर्वणि मार्कण्डेयसमास्यापर्वान्तर्गतमिति निश्चीयते। आधुनिकविमर्शनप्रकारस्योपयोगमावश्यकतां वाऽस्मिन्निर्णये न वयं पश्यामः॥

यद्यप्यस्मदुपलब्धकोशस्थकथासन्दर्भः स्कान्दांतर्गतां ६०. अध्यायात्मिकां हरिश्चन्द्रकथां मात्रयाऽनुसरति। तथापि ३३-अध्यायात्मकमाख्यानं बहुभिश्चारुतरैरंशैर्विशेषैश्च विराजते॥ रमणीयदेवनागराक्षरैः मनोहरमसृणचिक्कणपत्रेषु प्राचीनकोशानुसारेण सम्यक्परिशोध्य ३३ अध्यायात्मकं हरिश्चन्द्रोपाख्यानं अस्माभिर्मुद्राप्य प्रकाशितम्। उपाख्यानमिदमन्तरा भारतं न संपूर्णं भवतीति विपश्चितामाशयः। अतः पुस्तकमिदं सर्वैर्भारतसंगृहीतृभिस्सहृदयैरवश्यं ग्राह्यमिति प्रार्थ्यते। अस्य मूल्यं रू. १-८-०. प्रेषणादिव्ययः पृथक्॥

इत्थं सहृदयवशंवदः,

र. सुदर्शनशर्मा, साहित्यशिरोमणिः॥

॥ श्रीः ॥

# ॥ हरिश्चन्द्रोपाख्यानकथाऽनुक्रमणिका ॥

व्यमिति नृपे चिन्तयति विश्वामित्रागमनम्। अर्घ्यादिसमेतस्य राज्ञस्तत्पुरतोऽवस्थानम् ॥

अ. ९-अस्मदाश्रममागत्य मत्सुते कस्मात्ताडिते। छत्रचामरयाचनयाऽपराधिन्यौ चेन्मयि निवेदनीये। तयोर्दण्डनरूपं तवापराधं यद्यनयोः पाणिं गृह्णासि तर्हि क्षमिष्य इति विश्वामित्रवचनं ॥

अ. १०-चण्डालकन्यकापाणिं गृहाणेति विश्वामित्रवाक्यं श्रुत्वा कर्णौ पिधाय नाहं पाणिं गृहीष्यामि शरणागतं मामुद्धरेति राजप्रार्थना ॥

अ. ११-अपराधः क्षन्तव्यइति राजप्रार्थना। त्वं धनिकोऽपि लुब्ध इति विश्वामित्रेण राज्ञो निन्दा। बहुसुवर्णकयज्ञे बहुधनं प्रायच्छं। इदानीमपि याचितं दास्यामीति राजवाक्यम्। तर्हि मह्यं बहुसुवर्णकयज्ञपर्याप्तं धनं देहीति विश्वामित्रवाक्यम्। राज्ञा ऋषये धनदानम्। ऋषिणा प्रतिग्रहः ॥

अ. १२-विश्वामित्रेण पुनरपि कन्यकापरिणयनाय निर्बन्धः। मम एकैव भार्या अलम्। भवते दक्षिणा दत्ता भवान् यथेच्छं गच्छत्विति राजवचनम्। यत्किंचिदिच्छा सप्तद्वीपदातेव जल्पसीति ऋषिणो[illegible] राज्ञा सप्तद्वीपदानम्। मदीयभू[illegible] न स्थातव्यमिति ऋषिणोक्त[illegible] राज्ञः काशीं प्रति प्रस्थानम् ॥

अ. १३-मुनिना पुनरपि चण्डाल कन्यकापाणिग्रहणे राज्ञश्चोदनं नृपेण निराकरणम्। प्राक्प्रति ज्ञातबहुसुवर्णकयज्ञपर्याप्तधनं दे[illegible] हीति ऋषियाचना। राज्ञा किरी[illegible] टादीनां दानम्। किरीटादिद[illegible] नस्य भूमिदानान्तर्गतत्वात्पृथ[illegible] ग्देयामिति मुनिवचनम्। मासा[illegible] न्तः आर्जयित्वा ददामीति राज[illegible] वचनम्। राज्ञः काशीं प्रति प्रस्था[illegible] नम्। धनग्रहणाय विश्वामित्रे[illegible] नक्षत्रनामकशिष्यस्य

अ. १४-विश्वामित्राज्ञया भार्यापुत्रा[illegible] भ्यां सह नृपस्य वनगमनम्। रा[illegible] ज्ञा निवारितस्यापि सत्यकीर्तिना[illegible] मकस्य मन्त्रिणो राजानुसरणम्।

अ. १५-वने श्रमेण गच्छन्तं राजा[illegible] नं दृष्ट्वा अहोऽतिचञ्चलालक्ष्मीरि[illegible] त्यादिमन्त्रिणो विलापः। वने वस[illegible] तो राज्ञः सप्तविंशतिदिनापगमः।

जनविस्तीर्णमण्डलमेकयोजनोन्नतं धनं दास्यामीति चण्डालवचनम्। तद्दत्तं धनं प्रतिगृह्य राज्ञः विश्वामित्राय दानम् । विश्वामित्रेण पुनरपि कन्ये गृहाणेति कथनम्। राज्ञा प्रतिषेधः । विश्वामित्रस्य गमनम् ॥

अ.२३ चण्डालेन स्वपादसंवाहनाय राज्ञो नियोगः । राज्ञश्चिन्ता । चण्डालनिर्बन्धेन पादसंवाहने प्रवृत्तस्य राज्ञः चण्डालेन श्मशानं प्रति प्रेषणम् । तत्र मन्त्रिणा सह कुटीरे राज्ञो निवासः ॥

अ. २४-श्मशाने वसता राज्ञा मंत्रिणं प्रति पुण्येन सुखप्राप्तिः पापेन नरकानुभवः अतस्सर्वदा धर्मोऽनुष्ठेय इति कथनम् । मंत्रिणा धर्मस्वरूपे पृष्टे राज्ञा दशविधधर्मोपदेशः ॥

अ.२५-सपुत्रायाश्चन्द्रवत्याः ब्राह्मणगृहे शुश्रूषया कालयापनं। कदाचिद्बालकैस्सह काष्ठभारमादायागच्छतो लोहिताश्वस्य भारे पतिते तद्बन्धनार्थं दर्भच्छेदनसमये सर्पदष्टस्य लोकान्तरगमनम् । तच्छ्रवणेन पुत्रं द्रष्टुं प्रवृत्तायाः चंद्रवत्याः निरोधः । ब्राह्मणगृहे रात्रिभोजनपर्यंतं कार्याणि कृत्वा निशीथे वनं गत्वा सरस्तीरे पतितस्य पुत्रस्य दर्शनम् । विलापश्च ॥

अ. २६-श्मशानवासिनो राज्ञः चंद्रवतीरोदनध्वनिश्रवणेनागमनं । तं पिशाचं मत्वा चन्द्रवत्या राक्षस मां खाद मा पुत्रमिति दूरे स्थित्वा कथिते नाहं राक्षसः किंतु हरिश्चन्द्रइति नृपोक्तिः। चन्द्रवत्या राज्ञः पादयोः पतने मां मा स्पृशेति राज्ञो वचनम् । अहं ते जाया अयं ते पुत्रस्सर्पदष्टो मृत इति चंद्रवत्याः कथनम् ॥

अ.२७-मृतं पुत्रमाकर्ण्य राज्ञो विलापः । तदा तत्रागत्य मत्कन्यका विवाहे कृते पुत्रमुज्जीवयिष्य इति विश्वामित्रवचनम् । इतोप्यधिके श्रमे प्राप्तेऽपि नाहं सत्यं त्यजेयमिति राज्ञो वचनान्मुनेर्गमनम् ॥

अ. २८ मृतमिममादायाहं श्मशानं यास्यामि, त्वं विप्रगृहं गच्छेत्युक्त्वा राज्ञा चन्द्रवतीप्रेषणम्। चन्द्रवत्याः मार्गे कंचित् बालं हन्तुं प्रवृत्तानां चोराणां दर्शनं। चोरान्निवार्य तया बालरक्षणस-

॥ श्रीगणेशाय नमः ॥

श्रीमन्महाभारतवनपर्वान्तर्गतम् ॥

# ॥ हरिश्चन्द्रोपाख्यानम् ॥

## प्रथमोऽध्यायः ॥१॥

युधिष्ठिर उवाच— भगवन्निह लोकेऽस्मिन् सत्यवादी दयापरः । शौर्यवान्वीर्यसंपन्नो धृतिमान्बुद्धिमान्कृती ॥ सदा दानपरो धीमान्वदान्यः सत्यसङ्गरः । पुण्यश्लोकः पुण्यकीर्तिः पुण्यचारित्रशीलवान् ॥ पुण्यात्मा पुण्यकीर्तिश्च सतां पुण्यनिधिस्सुधीः । शरण्यः शरणार्थिभ्यो दाता यज्वा सुधार्मिकः ॥ सत्यशीलस्सत्यपरः सत्यवाक्यरतस्सदा । एकदारव्रतपरः परदारसहोदरः ॥ सर्वस्वदाता सत्पात्रे यज्ञे सर्वस्वदक्षिणः । सप्तद्वीपैकराजेन्द्रः सप्तार्चिर्द्विजपूजकः ॥५॥ सर्वदा सद्व्रतिपरः परसैन्यविमर्दनः । कामक्रोधादिरहितः कामदः कामिनां सदा ॥ संग्रामे निर्जितारातिर्दुर्मार्गनिधने यमः । सप्तद्वीपार्णवां पृथ्वीं निस्सपत्नां निरामयां ॥ निर्बाधां च निरातङ्कां नीरोगां च निराकुलाम् । निःशत्रुजनसंबाधां निष्पापां निरवग्रहाम् ॥ निरीतिबाधां निर्व्याधिं चोरमार्गविवर्जिताम् । निःक्षामां क्षोभनिर्मुक्तां दुर्भिक्षभयवर्जिताम् ॥ एवमादिगुणोपेतां शासिता नियमैस्सदा । युद्धे चाऽप्रतिमो वीर्ये क्षमया पृथिवी समः ॥१०॥ अग्निना सदृशःकोपे प्रसादे शशिना समः । समुद्र इव गाम्भीर्ये बलेन मरुता समः ॥ धर्मेण सदृशस्सत्ये वीर्ये बलभिदा समः । सूर्यपुत्रेण सदृशो धर्माधर्मविनिर्णये ॥ असतां निग्रहे चैव सतां च परिपालने । बृहस्पतिसमो बुद्ध्या धनदेन समःश्रिया ॥ ब्रह्मण्यो ब्रह्मवित्संगी विश्वजित् क्रतुजित्तथा । एतैश्चान्यैर्गुणैर्युक्तो महाराजस्त्रिशंकुजः ॥

एवमादिगुणैर्युक्ता राजानो बहवःपरे। विंशत्रिंशच्चपञ्चाशदयुतं नियुतं तथा ॥१५॥ वर्षाणां च सहस्राणि पालयित्वा महीं नृपाः। धर्मं कीर्तिं यशोदीप्तिमादाय ब्रह्मणोंऽतिक्रम् ॥ गत्वा वसन्ति कल्पान्ते- तेषु मुख्यस्त्रिशंकुजः। हरिश्चन्द्रो महाराजस्सत्यधर्मपरायणः ॥ यथा क्रमानुसेवीच पुरुषार्थचतुष्टयम्। यन्नामस्मरणे नृणां तत्तद्दोषो न विद्यते ॥ यद्बाहुबलमाश्रित्य स्वर्गे तिष्ठति वासवः। यस्य यज्ञेषु सर्वेषु राजसूयादिषु द्विजाः ॥ भुक्त्वा हवींषि विबुधाः पुरोडाशमुखानि च। तृप्तिं परमिकां प्रापुराशिषाचाप्ययूयुजन् ॥२०॥ हरिश्चन्द्रो महा राजः पुराणे परिपठ्यते। भोगेष्वासक्तचित्तोऽपि राजा राज्यधुरन्ध रः ॥ राज्यव्यापृतचित्तोऽपि नानृतं किंचिदब्रवीत्। स्वप्नान्तरेप्यसौ वक्ति सत्यमेव हि भूपतिः ॥ कथं स राजा धर्मात्मा भार्यापुत्रसम- न्वितः। राज्यान्निरस्य सौख्याच्च क्लेशितश्च पुरा किल ॥ लोहिता- श्वेन पुत्रेण चन्द्रवत्या च भार्यया। एतत्कथय विप्रेन्द्र पुण्यश्लो- कस्य धीमतः। यच्छ्रुत्वा ब्रह्महाचापि मुच्यते ब्रह्महत्यया ॥२४॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ॥२॥

मार्कण्डेय उवाच— शृणु राजन् पुरावृत्तं श्रोतृपापहरं शुभम्। धन्यं यशस्यमायुष्यं कान्तिदं पुष्टिवर्धनम् ॥ युधिष्ठिर उवाच— सुधर्मायां सुरेन्द्रस्य के तत्रासन् नृपोत्तमाः। ऋषयश्चैव तत्रासन् तान्मे कथय विस्तरात् ॥ तस्यां सभायां योगीन्द्र विश्वामित्रवसिष्ठयोः कथं विवादस्तत्रासीत्तत्रस्थाखिलभीतिदः ॥ हरिश्चन्द्रे कृपावापि वसिष्ठस्य मुने वद। विश्वामित्रस्य किं कोपो हरिश्चन्द्रे कृपात्मनि ॥ कां प्रतिज्ञां चकारासौ वसिष्ठो भगवान् ऋषिः। विश्वामित्रोऽकरोत् किंवा हरिश्चन्द्रकृते वद ॥५॥ एतदाख्यानमखिलं सर्वश्रोतृमनो- हरम्। अतुलं श्रोतुमिच्छामि सर्वपापहरं शुभम् ॥ सर्वक्लेशोपशमनं

चतुर्वर्गफलप्रदम्। श्रोतुमिच्छामि तत्सर्वं त्वत्प्रसादान्महामुने ॥ मार्कण्डेय उवाच— श्रूयतामभिधास्यामि पुराणाख्यानमुत्तमम्। धन्यं यशस्यमायुष्यं पावनं कीर्तिवर्धनम् ॥ यच्छ्रुत्वा मनुजो राजन् ब्रह्महत्यां व्यपोहति। हरिश्चन्द्रो महाराजः प्रजापतिरिवापरः। सूर्यवंशेऽभवद्वीरः त्रिशंक्वानन्दवर्धनः ॥ तेन राज्ञा स्वधर्मेण पाल्यमाने महीतले। देवलोकोऽपि चुक्षोभ हरिश्चन्द्रप्रभावतः ॥१०॥ एतस्मिन्नेव कालेतु कदाचित्कार्यगौरवात्। संभूय देवैर्देवेन्द्रो ऋषिभिस्सहशिष्यकैः ॥ अध्यतिष्ठद्देवसभां गन्धर्वाप्सरसां गणैः। आदित्यैर्वसुभीरुद्रैर्विश्वेदेवाश्विमारुतैः ॥ पूर्वेन्द्रैः पूर्वमनुभिर्मुनिभिःपूर्वपूर्वकैः। साध्यादिभिर्देवगणैः यक्षराक्षसपन्नगैः ॥ एतैरन्यैर्देवगणैः ऋषिभिस्सहशिष्यकैः। उपास्यमान अध्यास्ते सुधर्मां तां सुरेश्वरः ॥ सभायामृतवःषड्च मूर्तिमन्त उपासते। सुगन्धी शीतलो मन्दो वायुर्वाति सुखप्रदः ॥१५॥ नृत्यमानेऽप्सरगणैर्गीयमाने च किन्नरैः। गन्धर्वैस्तूयमाने च शस्यमाने मुनीश्वरैः ॥ महान् कोलाहलो जातः कथाः कथयतां नृप। इक्ष्वाकुप्रभृतीनां च राज्ञामाहवशालिनाम् ॥ उर्वशीरमणानां च सूर्येद्वन्वयजन्मनाम्। ऋषयः केचिदिक्ष्वाकुप्रभृतीन् भूमिवल्लभान् ॥ प्रशशंसुर्वसिष्ठाद्याः व्यासाद्याः सोमवंशजान्। स्तुवन्ति केचिन्नहुषं ययातिमपरे जगुः ॥ मान्धातारं पृथुं चान्ये भार्गवच्यवनादयः। अम्बरीषं महाभागं नारदाद्यास्सुरर्षयः ॥२०॥ दत्तात्रेयोऽर्जुनं चैव हैहयाधिपतिं तथा। राजानं सगरं चान्ये गर्गाद्या मुनिपुङ्गवाः ॥ भगीरथं दिलीपं च कुरुं पूरुं च हस्तिनम्। रन्तिदेवं नृगंचैव वसुमन्तं प्रतर्दनम् ॥ उशीनरं च तत्पुत्रं शिबिं परमधार्मिकम्। दुष्यन्तं भरतं चैव नागानन्दं विदूरथम् ॥ ऋषभं चाजमीढं च कुशनाभं कुजध्वजम्। अत्रिर्भृगुर्भरद्वाजः कण्वो मेधातिथिर्वसुः ॥ शलभो मुद्गरो बोध्यो रोमशो गोतमोऋषिः। पुलस्त्यश्चांगिराश्चैव प्रशशंसुः पृथक्पृथक् ॥२५॥ नृपेषु शस्यमानेषु

तत्रतत्र सभातले । मुनिभिः शस्यमाने तु गुणशीलानुवर्तनैः ॥ स्तूय माने हरिश्चन्द्रे वसिष्ठेन महात्मना । गुणशीलवयोरूपैराचारचरणेन च ॥ विशेषात्सत्यवाक्येन धर्मेण च दमेन च । एकदारव्रतेनैव तच्छ्रुत्वा कुशिकात्मजः ॥ सर्वानतीत्य भूपालान् सर्वसद्गुणशालिनः । वसिष्ठोऽतिशयात्स्तौति हरिश्चन्द्रं त्रिशंकुजम् ॥ तच्छ्रुत्वा वचनं क्रुद्धो वसिष्ठेन समीरितम् । विश्वामित्रो महातेजाः मनस्येवमचिन्तयत् ॥३०॥ पातयाम्यहमेवैनं सत्याच्चलितमानसम् । इति निश्चित्य मनसा वसिष्ठान्तिकमागमत् ॥ मार्कण्डेय उवाच— सभायां च तदा तस्यां विवादः सुमहानभूत् । विश्वामित्र उवाच— शृण्वन्तु देवा राजानः सर्वे च मुनिसत्तमाः ॥ विषयेन्द्रियसंयोगी सर्वैश्वर्यसमृद्धिमान् ॥ ललनामध्यगो राजा भोगेष्वासक्तमानसः । एकदारव्रतो नास्ति सत्यवाङ्नास्ति कुत्रचित् ॥ न श्रद्दधे वसिष्ठस्य वचोऽहं सुरसत्तमाः । विश्वामित्रेणैवमुक्ते वसिष्ठोऽपि महानृषिः ॥३५॥ शृण्वतां चैव देवानां मुनीनां चैव सर्वशः । दक्षिणं पाणिमुद्धृत्य सर्वे शृण्वं त्वितीरयन् ॥ एवमादिगुणैर्वा स इतोप्याधिकएव वा । मातृतुल्यान्यदारोऽसौ सत्यवाक्चात्रिशंकुजः ॥ अप्सरोगणमध्यस्थः त्रैलोक्याधिपतिश्च वा । एकदारव्रतश्चैव सत्यवाक्च पुनःपुनः ॥ त्रिशंकुजो हरिश्चन्द्रः शक्रतुल्यपराक्रमः । स्वप्नेऽपि नस्मरेद्योषामन्यामौशीनरी विना । सत्यान्नच्यवते राजा प्राणैः कण्ठगतैरपि ॥४०॥ विश्वामित्र उवाच— पञ्चाशत्कोटिवर्षाणि तपश्चीर्णं मया पुरा । तावद्भारत वर्षेषु ये राजानः प्रकीर्तिताः ॥ तेषु राजसु सर्वेषु सूर्येन्द्वन्वयजन्मसु एकदारव्रतं चापि सत्यवाक्यं न शुश्रुमः ॥ वसिष्ठ उवाच— पञ्चाशत्कोटिवर्षाणि तपश्चीर्णं त्वया पुरा । सत्यमेतन्नसन्देहः एतावत्कालगोभवान् । एतादृशः सत्यवादी परदारपितोपमः ॥ हरिश्चन्द्रोपमो राजा त्वया दृष्टः कदाचन । ब्रह्मर्षित्वं मया दत्तं यदा ते कुशिकात्मज ॥ ततोपि पूर्वमेवाहं ब्रह्मणोङ्गात्समुद्भवः । तदा प्रभृत्येवा-

द्यांतं राजानः कोटिकोटिशः ॥४५॥ मया दृष्टा ह्यसंख्याता तेष्वनेन समो नहि। शासितेयं वसुमती लोकपालोपमैर्नृपैः॥ प्रियव्रतोत्तान पादौ क्षत्रियाग्र्यौ महाबलौ। दृष्टौ मया धर्ममूर्ती सप्तद्वीपाधिपावुभौ॥ प्रियव्रतेन तेनेयं सप्तद्वीपा वसुंधरा। प्रदक्षिणीकृता सप्तवारं सप्ताब्धयोऽभवन्॥ रथस्य वीथयः सप्त प्रियव्रतनृपस्य च। पालयामास पृथिवीं सप्तद्वीपार्णवावृताम्॥ प्रियव्रतश्चैकएव ह्यनन्यांतपवारणः। तस्य पालयतः पृथ्वीं पद्मानां दशपञ्चच। वर्षाणि कौशिक मया दृष्टानि नरसंख्यया ॥५०॥ यस्यराज्ञस्सप्तपुत्रास्सप्तद्वीपाधिपाऽभवन्। द्वीपान्पालयतां तेषामापद्यत समागमः॥ एकदारव्रते सत्ये त्रिशंकुज समो न सः। उत्तानपादमहिमा मया वक्तुं न शक्यते॥ तभ्यामसौ हरिश्चन्द्रः समानोवाऽधिकोपिवा। सत्ये दमेच धर्मेच प्रजानां परिपालने॥ किंबहूक्त्या मुनिश्रेष्ठ मया दृष्टाजगत्त्रये त्रैकालिकं त्वया दृष्टं चतुर्थांशो न विद्यते॥ शासितेयं वसुमती लोकपालांशजैर्मुने। तामेवभूमिमधुना हरिश्चन्द्रः प्रशासति। ५५॥ सप्तद्वीपार्णवां पृथ्वीं सत्यधर्मपुरस्सरम्। सत्यमेव पुरस्कृत्य चातुर्वर्ण्यं प्रशांसति। धर्मात्मा सत्यवादी च नाऽन्यो राजा त्रिशंकुजात्। किं गाधिज बहूक्तेन श्रृणु मे तादृशं वचः॥ वायुर्वा न चलेत् स्थानात् अग्निर्वा शीतलो भवेत्। हिमवांश्च चलेत् स्थानान्मेरुर्वा वियदुत्पतेत्॥ शुष्येयुःसागराःसप्त सूर्यो भवतु चन्द्रमाः। शीतांशु रुष्णगुश्चस्यात् भूमिराकाशगा भवेत्॥ आकाशो भूमिगश्च स्यात् भास्करोदेतु पश्चिमे। भवेयुरुदिताश्चैवं नह्यादित्यान्वयोद्भवः॥६०॥ त्रिशंकुजो हरिश्चन्द्रः कामक्रोधभयादपि। अर्थलोभाद्धेतुवादान्मात्सर्यात्स्वर्गलोभतः॥ त्रैलोक्यराज्यलाभाद्वा प्राणत्यागभयादपि। स्वप्नान्तरेप्यऽसौ राजा हरिश्चन्द्रः प्रतापवान्॥ अनृतां न वदेद्वाचं नचान्यां स्त्रियमीक्षते। वेदोक्तपरमाचारः सत्यवादी दयापरः॥ भोगेष्वासक्तचित्तोऽपि ललनाकेलिलोलितः। स्मरेण साक्षादाविष्टः

सत्यान्नापैति भूमिपः ॥ ऊर्वशीमेनकारम्भा विश्वाचीच तिलोत्तमा । एताश्चान्याविवस्त्राश्च सर्वाभरणभूषिताः ॥ मुनिमोहनशीलाश्च बाहु-पाशैर्निबध्यच । मोहयन्तु स्वलीलाभिर्विभ्रमैर्भ्रामयन्तु वा । तथापि निर्विकारोऽसौ विकारं नाप्नुयात्क्वचित् ॥६६॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ॥३॥

मार्कण्डेय उवाच— वसिष्ठेनैवमुक्ते तु विश्वामित्रो महामुनिः । क्रोधरक्तान्तनयनः इदं वचनमब्रवीत् ॥ कोहि नाम पुमान्लोके राज्य लक्ष्मीसमन्वितः । सत्यवागेकदारश्च मया नश्रूयते कदा ॥ नदृश्यते मया कुत्र वचो नश्रद्दधामि ते । सत्यादसौ यदि मया च्यावितः पृथिवीपतिः । तदा ते किं पणो ब्रह्मन् इन्द्रस्य वद सन्निधौ ॥ वसिष्ठ उवाच— व्यसनासक्तचित्तोऽपि ललनाकेलिलम्पटः । स्वप्नांतरे-प्यऽसौ राजा नानृतं वदति क्वचित् । शृण्वन्तु ऋषयस्सर्वे देवाश्चेद्र-पुरोगमाः ॥५॥ प्रतिज्ञां मम दुर्धर्षां तत्सत्यं प्रत्युदाहृताम् । वेद धर्मानातिक्रम्य दिग्वासा दक्षिणामुख. ॥ विशिखोऽनुपवीतश्च धूलि धूसरदेहभृत् । सुरां पिबन् कपालेन शिरसो ब्राह्मणस्य च ॥ या-स्यामि प्रेतराजाशां यद्यसावनृतं वदेत् । कृतायां दुःष्प्रतिज्ञायां वसिष्ठेन महात्मना ॥ महान् कोलाहलो जज्ञे सुधर्मायां नरेश्वर । हाहेति चुक्रुशुःकेचित्केचिद्धलहलेति च ॥ धिग्धिगित्यपरे प्राहुर्हाहा-हन्तेति चापरे । ब्राह्मणेन नवक्तव्यं श्रोतव्यश्च कदाचन ॥१०॥ ब्राह्मण्यमपिसंप्राप्तः कौशिकस्तपसा महान् । न क्षात्री प्रकृतिं मुक्त्वा चाद्यापि शममेयिवान् ॥ (जन्मारभ्य) जन्मान्तराद्वसिष्ठस्य कोपो-नास्तीति च श्रुतम् । अधुनापि तथाकोपः कुतोवाऽयं समागतः ॥ इत्थमासीत्सुधर्मायां महान् कोलाहलो नृप । सर्वे देवाश्च मुनयस्तेन वाक्येन तेजिताः ॥ पिधाय कर्णावासिनास्तूष्णीमासन्नवाङ्मुखाः ।

प्रतिज्ञाते वसिष्ठेन हरिश्चन्द्राय पार्थिव । त्रैलोक्यमगमत्क्षोभं युगांत समये यथा ॥ मार्कण्डेय उवाच— अवगत्य सुनासीरः दुष्प्रतिज्ञां भयङ्कराम् । उवाचात्मभुवः सूनुं ब्रह्मतेजोनिधिं मुनिम् ॥१५॥ असद्वाक्यमयुक्तं ते वक्तुमेतत् द्विजोत्तम । क्रुद्धाअपि महात्मानो न वदन्त्यतिगार्हितम् ॥ वैशम्पायन उवाच— एवमुक्ते सुरेन्द्रेण वसिष्ठं प्रति भूमिप । विश्वामित्रोऽभ्युवाचेदं बलारातिं सभातले ॥ विश्वामित्र उवाच—शृण्वन्तु ऋषयस्सर्वे शृणोतु बलसूदनः । प्रतिज्ञां मम दुर्धर्षां माकुप्यन्तु मुनिं प्रति ॥ अनेकमायाव्याजेन क्षुद्रोपद्रवणेन च । महत्या पीडयाचैव प्राणान्तकरणेन च ॥ कियत्कियन्मया शक्यं कर्तुं तस्य महीपतेः । तावत्तावत्करिष्यामि ह्यसह्यं दुःखमञ्जसा ॥२०॥ स्वयमेवात्मनः छित्वा शिरो मरणमाप्नुयात् । यथा राजा तथा दुःख करिष्यामि दिवानिशम् ॥ सुव्यक्तं पातयिष्यामि दुरन्ते दुःखसागरे । तथादुःखाभिभूतोऽपि सत्यान्नच्यवते यदि ॥ या प्रतिज्ञा कृता घोरा वसिष्ठेन तवान्तिके । अहमेव प्रतिज्ञां तां पारं यास्यामि दुस्सहाम् ॥ ब्रह्मलोकनिवासस्स्याद्यावदिन्द्राश्चतुर्दश । सत्यवाक्य प्रभावेण हरिश्चन्द्रस्य भूपतेः ॥२४॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः ॥४॥

मार्कण्डेय उवाच— विश्वामित्रवसिष्ठौ तौ कृत्वैवं सुरसद्मनि । प्रतिज्ञां मनसाऽचिन्त्यां गच्छतोऽथ सुरालयात् ॥ ततो देवादयस्सर्वे स्वं स्वं धाम प्रपेदिरे । कौशिकः स्वाश्रमं प्राप्तो वसिष्ठोऽपि स्वमाश्रमम् अथागत्य पुरीं प्राज्ञो वसिष्ठो लोकविश्रुताम् । अयोध्यां भरतश्रेष्ठ हरिश्चन्द्रमकल्मषम् । दृष्ट्वा तं कथयामास प्रवृत्तं देवसद्मनि ॥ वसिष्ठ उवाच— विश्वामित्राश्रमे राजन्नगन्तव्यं कदाचन । अहितस्ते दिवा रात्रं प्राणैरपि धनैरपि ॥ अतस्त्वया नगंतव्यं विश्वामित्राश्रमं प्रति ।

गन्ताचेत्पतितश्चस्याः दुरन्तेदुःखसागरे ॥५॥ एवमुक्तो वसिष्ठेन हरिश्चन्द्रो महातपाः । प्रोवाच वचनं धीमान् सर्वशास्त्रविशारदः ॥ त्वंहि नः परमो धर्मः त्वंहि नः परमो गुरुः । त्वंहि नः परमंब्रह्म त्वंहि नः परमागतिः ॥ त्वया यदुक्तं तत्सर्वं करिष्ये तपतां वर । इत्युक्तः सवसिष्ठस्तु स्वाश्रमं निरगाद्वशी ॥ अयोध्यायाः पतिः श्रीमान् प्रजा' धर्मेण पालयन् । अयोध्यायाविनिर्गत्य राज्यं योग बलेन च॥ संपालयन्निस्सपत्नं निश्शत्रुपारिबाधनम्। गते बहुतिथे काले विश्वामित्रो महामुनिः। नानाविधान् मृगान्दुष्टान् प्रजोपद्रवकारिणः ॥१०॥ आकाशे पक्षिणश्चापि प्राणिपीडाकरान् बहून् । सृष्ट्वा घोरान् महाभागो नाशयामासचौषधीः ॥ खिलीकृत्याखिल राज्यं राजानं च युधिष्ठिर । स्ववशे स्थापयामास हरिश्चन्द्रमकल्मषम्।' मृगोपद्रव माकर्ण्य प्रजाक्रोशेन पार्थिवः । प्रजापालनधर्मज्ञः प्रजानामनुकम्पया ॥ सर्वशस्त्रास्त्रसंपन्नं किंकिणीजालमण्डितम् । युक्तंहयसहस्रेण व्याघ्रचर्मपरिष्कृतम् ॥ मणिकाञ्चनचित्राङ्गं प्रकीर्णकपरिष्कृतम् । नानाविधाभिश्चित्राभि' पताकाभिरलंकृतम् ॥१५॥ रविमण्डलसंसर्गिगिरिदुर्गाद्यसङ्गतम् । मेघदुन्दुभिनिर्घोषं सर्वायुधपरिष्कृतम् ॥ स राजा युधिविक्रान्तः सर्वायुधसमन्वितः । स्त्रीपुत्रमन्त्रिसहितः पुरोधोन्यस्तराज्यधूः॥ आस्थाय विपुलं यानं संगृहीतशरासनः । प्रयुक्ताशीर्द्विजवरैः कृतमङ्गलशोभितः ॥ सशरं च धनुर्गृह्य सन्नद्धः कवचावृत । स्तूयमानो गीयमानः सूतमागधवन्दिभिः ॥ मृगया रसिको राजन् स्वपुरान्निर्ययौ वशी । तस्यनिष्क्रांतिसमये दारुणा भयशंसिनः ॥२०॥ अभूवन्नाकुलाभूमावुत्पाताबहवो नृप । निर्घातो भूमिकम्पश्च शिवारावाश्च दारुणाः ॥ ववर्षुरबुदा धूलि रक्ताबिन्दु विमिश्रितम् । अपसव्यं तदा चक्रुः सर्वेच मृगपक्षिणः ॥ तस्य ध्वजाग्रे गृध्रश्च विलिल्ये भयसूचकः । *वामेम्से चोरुकंपश्च निष्कारण भयातुरः । प्रविश्य सुमहद्धोरं वनं व्यालनिषेवितम् ॥ हत्वा मृगान्

वराहांश्च सिंहव्यालवृकांस्तथा। तरक्षून्महिषान्दुष्टानन्यांश्च प्राणिहिंसकान्। प्रजापीडान्विनिघ्नन्हि विचचार महावने ॥२५॥ प्राच्यां च दक्षिणस्यां च दुष्टसत्वानहन्बली। उत्तरां दिशमाक्रम्य कैलासालंकृतां शिवाम् ॥ तिस्रो दिशस्समुद्रांताश्चरित्वैवं बलीयसः। प्राणिहिंसाकरान्निघ्नन्विचचाराखिले वने ॥ तत्राश्रमो महानासीद्गाधिसूनोर्महात्मनः। दैवयोगाद्विवेशाथ कालपाशैश्च पाशितः ॥ द्वित्रयोजनमात्रस्थं विश्वामित्राश्रमं नृपः। प्रविष्ट एव कस्मिंश्चिन्नदीतीरे निविष्टवान् ॥ भेरीशङ्खनिनादांश्च हेलितास्फोटितान्रवान्। निःसाणपटहारावान्सेनाकलकलारवान् ॥३०॥ श्रुत्वा रावान्हि गाधेयो हर्षमापातुलं महत्। आगतः किं स राजेति हर्षकोपाकुलो मुनिः ॥ सृष्ट्वा मायामृगं सद्यो दर्शनीयं मनोरमम्। महामोहमयं प्राज्ञो लोकविस्मयकारकम् ॥ आजुहावाथ राजानं सस्त्रीकं धर्मनंदन। दृष्ट्वा स तं मृगं राजा मायात्मकममन्यत ॥ सीतारामौ तदा दध्यौ मारीचर्मृगहारितौ। दृष्ट्वोवाच मृग साध्वी मनो विस्मयकारकम् ॥ गृहीत्वा देहि मे राजन्नयामि गृहमात्मनः। सर्वज्ञोऽपि तदा राजा दैवपाशेन यंत्रितः ॥३५॥ चोदितश्चंद्रवत्यैवं सीतयेव रघूत्तमः। मृगमन्वसरद्राजन्नाकृष्टशरकार्मुकः ॥ समंत्रिपुत्रभार्यश्च रथेन महता ययौ। आकाशगः कदाचित्स कदाचिद्भूमिगो मृगः ॥ हस्तग्राह्यः कदाचित्स कदाचिद्दूरगोऽभवत्। दृग्गोचरोऽभवत्क्वापि क्वाप्यदृश्योऽभवत्पुनः ॥ यदा तद्ग्रहणे राजा निराशस्सोऽभवत्पुनः। औशीनर्या पुनर्दृष्टः लोभनाय सुशीलया ॥ पत्नीभावमनुज्ञाय पुनस्तं मृगमन्वगात्। परावरज्ञो भूतानां नीतिशास्त्रविशारदः ॥४०॥ हितकृत्प्रियवादीच राज्ञः प्राणोबहिश्चरः। सोऽपि नोवाच दैवेन पर्यालीढमनोरथः ॥ राजा सोऽपि परीतात्मा दैवेन पिहितात्मधीः। मिथ्यामृगात्मकं दैवमात्मनःपूर्वसूचितम् ॥ प्रियाप्रेरणरूपेण भागधेयेन कल्पितम्। शरं संधाय धनुषि ह्यन्वगात्कुहनामृगम् ॥ मृगमन्वगमद्राजा गच्छन्नेवाविशद्वनम्।

दूरं नीत्वा स राजानं गाधिपुत्राश्रमांतिकम् ॥ प्रवेश्य च स्वयं पश्चात्तिरो भावमुपेत्यच । इतस्त्वं स्वपुरं भूयो न पश्यसि नृपोत्तम । इत्युक्त्वा कुहनासत्वं नृपोत्तम तिरो(दधे)हितम् ॥४५॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने चतुर्थोऽध्यायः ॥

## पंचमोऽध्यायः ॥५॥

मार्कण्डेय उवाच— दृष्ट्वाऽऽश्रमपदं दिव्यं सर्वसत्वनिषेवितम् । वृक्षैःपुष्पफलोपेतैस्सराजा विस्मयान्वितः ॥ कस्येदमाश्रमपदं मनसो ह्लादकारकम् । वायुर्मन्दः प्रवात्येष मनोज्ञः सुखशीतलः ॥ आतपाद्यध्वखेदोत्थस्वेदवारिलवान्नुदन् । गङ्गाशीकरवर्षीच कम्पयन्पल्लवानहो ॥ भिन्दन्वाति तरङ्गौघान् मृतान् सञ्जीवयन्निव । किन्वेतन्नंदनवनं वैभ्राजं ब्रह्मणो वनम् ॥ कौबेरं वारुणं वैतदहो वनमिदं महत् । दृष्टमात्रेच सर्वेषां क्षुत्पिपासे विनश्यतः ॥५॥ नारिंगकदली निम्बनीपसालकपित्थकैः । प्लक्षाश्वत्थवटांकोलैःकोविदारकरञ्जकैः ॥ घोटार्जुनासनालोध्रैरिक्षूदुम्बरतिन्दुकैः । पुन्नागचम्पकांकोलताल-सालसमाकुलैः ॥ सजीरतित्रिणीबिल्वखर्जूरेलालवङ्गकैः । मल्लिका-जातिपद्मैश्च केतक्युत्पलपाटलैः ॥ मालतीयूथिकाकुन्दमधूकाचिरि-बिल्वकैः । करवीरैः कोविदारैः कर्णिकारधवांकुशैः ॥ श्लेष्मातक कदम्बैश्च सिधुवारातिमुक्तकैः । त्रिपत्रसप्तपत्रैश्च कर्कन्ध्वामलकैरपि ॥१०॥ शिरीषलिकुचैर्वृक्षैः पीलुकैरणमर्दकैः । तरङ्गैः शिंशुमारैश्च नारिकेळैः सदाफलैः ॥ तिन्दुकैः पारिभद्रैश्च कुंभीखदिरकेतकैः । वानीरैः पीलुकैश्चैव जंबीरैःसुरखादिरैः ॥ बीजपूरैश्च जंबीरैर्मधुकै जीरकैरपि । शाखोटकैरुग्रगन्धैः करहाटकद्रुमैः ॥ चम्पकैः मञ्जरीभिश्च मंजिष्ठैर्भूर्जवंशकैः । त्वक्सारैःकेसरैश्चैव शिरीषाषाढमालवैः ॥ पलाशकिंशुकैश्चम्पैः श्लेष्मातककलिद्रुमैः । मल्लिकाकुन्दपद्मैश्च कल्हार कुमुदैरपि । यूथिका मालती जाती शतपुष्पा शतावरी ॥१५॥ सिंह-

व्याघ्रवराहाखुखंजरीटैश्च गोमृगैः । रुरुसारङ्गभल्लूकैः शश-गोधाशशत्वचैः ॥ कृष्णसारखराभीरवारणैः शाकरैरपि । सृगालैर्जम्बुकैश्चैव वनमार्जाररोहितैः ॥ हंससारसकादम्बैः वनवायस कुक्कुटैः । चक्रवाकैश्शुभैः खड्गैः कोकिलैः शुकसारिभिः ॥ बकभासैश्च भेरुण्डैः शुभैः कोयष्टिकैस्तथा । वानरैर्वनजैश्चान्यैः शब्दितं सुमनोहरम् ॥ नदीनदसरिद्भिश्च वापीकूपमहाह्रदैः । कासारैः कच्छदेशैश्च देवखातैस्सदाजलैः ॥२०॥ अहो वनस्य सौरभ्यं अहो शैत्यं विशालता । न मे मनो विनिर्गन्तुं वांछतीतः कदाचन ॥ क्षुत्पिपासा च मे नास्ति श्रमो नास्त्यध्वसंभवः । संत्यज्येदं न यास्यामि स्वर्गलोकमिदं मम ॥ मया न दृष्टमेतावत्कालं वनमिदं महत् । किं वदाम्यस्य माहात्म्यं वनस्यातिमनोहरम् ॥ सिंहीस्तनं पिबत्येषः कुंजरोत्सङ्गसंस्थितः । पञ्चास्यशावकोप्यस्ति ग्रीवायां मत्तहस्तिनः ॥ मार्जारमूषकौ चैव रमतश्च परस्परम् । छायां मिथः समासीनाः भोगिनश्च कलापिनः ॥२५॥ मण्डूकसर्पाश्चान्योन्यं स्नेहं कुर्वन्ति भूमिप । वैरं नैजं च यैर्येषां ते तदुत्सृज्य तैस्सह ॥ स्कन्धोत्संगांगसंलग्नाः क्रीडन्तो रेमिरे मिथः । कस्येदमाश्रमपदं महिमा कस्य वा मुनेः ॥ कस्यापिचाश्रमः तस्य मुनेर्लोके भविष्यति । इति विस्मयतस्तस्य वागुवाचाशरीरिणी ॥ न गन्तव्यं त्वया राजन् यस्याश्रमपदं भवान् । इत्यादिष्टो वसिष्ठेन तदिदं प्राप्तवानासि ॥ को निवर्तयितुं शक्तो लोके दैवविचेष्टितम् । ततो वियद्वचः श्रुत्वा वज्रपातोपमं भृशम् । संवर्ताम्बुधिवेलेव स चुक्षोभाकुलेन्द्रियः ॥३०॥ चन्द्रवत्युवाच— किं खिन्नोऽसि महाराज श्रुतं खे किं वचस्त्वया । कुहनामृगवांछायाः जिह्वायां मृत्युराविशत् ॥ गृहीत्वेमं मृगं मह्यं देहीति प्रेरितो मया । अनुत्सृज्य मृगं घोरं प्राविशस्त्वं वनं महत् ॥ राघवस्य यथा सीता दण्डकारण्यवासिनः । दुःखहेतुरहं जाता तथा ते मम मानद । किं करोमि क्व यास्यामि पतिताः स्मो हविर्भुजि ॥

मार्कण्डेय उवाच— श्रवणादेववाक्यस्य चन्द्रवत्यास्तथैवतु । भीता खिलेन्द्रियो भूत्वा भार्यामिदमुवाच ह । शृणु भद्रे वचो मह्यं येनाहं भृशदुःखितः ॥३५॥ अहं शोचामि नैवं मे तव चैवात्मजस्यच । गुरुवाक्याभिचारो यः स मां दहति सांप्रतम् ॥ वार्यमाणो वसिष्ठेन सुहृदा गुरुणा मम । न कृतं वचनं तस्य तन्मां दहति सांप्रतम् ॥ मया मूढेन मूर्खेण गुरुवाक्यावमानिना । विनाशितावुभौ लोकौ ऐहिकामुष्मिकौ चह ॥ अप्रमत्ता हि विद्वांसो धर्मशास्त्रार्थनिश्चयाः । सत्यधर्मपराश्शान्ताः गुरुधर्मपरायणाः ॥ नातिक्रामंति मर्यादां गुरवो दर्शयंति याम् । एवमुक्त्वा महीपालो निषसादाऽऽसने शुभे ॥४०॥ मार्कण्डेय उवाच— विषण्णवदनं दीनमधोवदनमातुरम् । दीर्घमुष्णं विशेषेण निश्वसंतं मुहुर्मुहुः । दृष्ट्वा पतिं चंद्रवती दुःखिता वाक्यमब्रवीत् ॥ चंद्रवत्युवाच— मा विषादं कृथा राजन् दैवं हि दुरतिक्रमम् । अतीतं माऽनुशोचस्त्वं अतीतं नानुवर्तय ॥ गतोदकप्रवाहस्य सेतुं बध्नीहि मा धव । यथाकालानुवर्ती स्याः दैवारोपितपौरुषः ॥ दैवमेवानुवर्तस्व कृतं सर्वोऽनुवर्तते । स्वकृतं च स्वयं भुंक्ते (भोज्यं) शुभं वा यदि वेतरत् । यत्र येन च भोक्तव्यं श्रेयो वा यदि वेतरत् ॥४५॥ अवश्यं नीयते जंतुस्तेन तत्रैव मानद । इत्याश्वस्तस्स भूपालो निषसाद महीतले ॥ दीर्घमार्गातपक्लांतो रथवेगेन खेदितः । गुर्वाज्ञालंघनोद्भूतमनःखेदावखेदितः ॥ गाधिजोदुम्बरस्यांतर्ग्रासभूतोस्तमानसः । इतिकर्तव्यतामूढश्चिन्तान्दोलितलोलधीः ॥ भाविकर्मबलेनैव निद्रावशमुपेयिवान् । सोऽब्रवीदात्मनःपत्नीं निद्रामुद्रितलोचनः ॥ स्वपाम्यहं तवोत्सङ्गे निषीदेत्यस्वपत्तदा । उपविष्टाऽस्वपच्चापि गण्डविन्यस्तबाहुका ॥५०॥ राज्यलक्ष्मीर्विनिर्गच्छेत्किमेतस्मान्महीपतेः । इतिडोलायितमनाः तं त्यक्त्वा गाढनिद्रया ॥ स मुहूर्तं नृपः सुप्त्वा सहसोत्थाय सत्वरः । बाहुं दक्षिणमुद्धृत्य बाष्पपर्याकुलेक्षणः ॥ अब्रवीन्निश्वसन्दीर्घं कोऽयं

शापोऽतिदारुणः। नमोक्तव्यस्त्वया शापः शिष्योऽहं तव कौशिक ॥ शतापराधिनः पुत्रा शिष्या वा मुनिसत्तम । पित्रा च गुरुणा वा ते न शप्तव्याः कदाचन ॥ नांतरं विद्यते स्वामिन् गुरूणां शिष्यपुत्रयोः। वसिष्ठश्च भवांश्चैव ममैव भवतो गुरू ॥५५॥ दासोऽहं तव दासोऽहं दासोऽहं तव कौशिक । इत्याक्रुश्य ततो मौनी पश्यन्ननिमिषेक्षणः ॥ अतीव निश्वसन् दीर्घं कोऽयं स्वप्नोऽतिदारुणः । इतिस्तब्धमना भूपो निभृतं समतिष्ठत ॥ श्रुत्वातामात्मनःपत्युर्विकलां वाचमीरिताम् । विनिद्रा श्रीमती भीता भर्तारमिदमब्रवीत् ॥ दुःखाश्रुपूर्णनयना नेत्रांबुपिहितानना । औशीनरी पतिप्राणा कम्पिताखिलविग्रहा । रंभेव विहता वर्षे महावेगेन वायुना ॥ चंद्रवत्युवाच— किमस्ति ब्रह्मणो भीतिः किमस्त्यसुरमर्दनम् । किमस्ति भीः पुराराते: तदा ते खलु साध्वसम् ॥६०॥ देवासुरमहायुद्धे देवारिभयवर्द्धन । सुराणामभयो दत्तस्त्वद्बाहुबलसंश्रयात् ॥ स्वर्गं शास्ति शचीजानिः कुतस्ते भयमागतम् । विपरीतमिदं मन्ये यत्ते साध्वससंभवः । अग्नौ शैत्यं रवौ शैत्यं इन्दावौष्ण्यं यथाऽऽगतम् । यत्परिप्लवनं मेरोर्यद्धिमालयचालनम्॥ अचांचल्यं तु यच्चापां खपुष्पस्येव सौरभम्। शशश्च मृगसंभूतः यद्वत्तद्वत्करिष्यति ॥६४॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ॥६॥

हरिश्चंद्र उवाच— शृणु कल्याणि मे वाक्यं परमार्थार्थसंश्रयम् । दैवेऽनुकूले भद्रं ते सर्वं संपत्स्यते नृषु ॥ प्रतिकूले सति तदा ब्रह्मणोप्यशुभं भवेत् । शिरच्छेदो भवेद्धातुः पिनाकी च कपालधृक् ॥ तथैव विष्णोर्जन्मानि मरणानि बहून्यपि । उदयास्तमयौ भानोः नानुवर्तेत को विधिम्। पापिना धर्मिणा वापि ह्यतिक्रांतुं न शक्यते । यज्ञदानतपःकर्मजपहोमार्चनादिभिः ॥ मंत्रैश्च प्रज्ञया

वापि पौरुषोत्साहनीतिभिः। ओजसा तेजसा चैव सत्वेन च बलेन च ॥५॥ रथनागाश्वसंपत्त्या ज्ञातिसंपत्तिबांधवैः। प्राप्तव्यमेव प्राप्नोति जित्वापि भुवनत्रयम् ॥ अटित्वापि जगत्कृत्स्नमप्राप्तव्यं नचाप्नुयात्। यत्र नाहं गमिष्यामि प्रतिज्ञामकरोदिति ॥ पौर्विकं तत्र तं नीत्वा भोजयेच्च शुभाशुभम्। तस्मादाज्ञां समुल्लंघ्य वसिष्ठस्य विधेर्बलात् ॥ विश्वामित्राश्रमं प्राप्तः कालस्यांतर्गतोऽबले। भागधेयं तदाक्रांतं नीयमानं शुभाशुभम् ॥ भोक्तुं भोक्तव्यपापेन धर्मो नत्राति तद्बली। शृणु सुश्रोण्यहं सुप्तस्तवोत्संगोपबर्हणः ॥१०॥ दुःस्वप्नं दृष्टवान् घोरमदृष्टं चाश्रुतं भयम्। सुवृत्तस्य शुचेश्चापि दयालोरपिधर्मिणः ॥ शुद्धांतःकरणस्यापि दिवास्वप्नोऽशुभप्रदः। रौद्रःस्वप्नो मया दृष्टः सुप्तेन वरवर्णिनि ॥ तेन मे हृदयं त्रस्तं देहकंपोऽतिदारुणः। कृष्णे कृष्णाम्बरधरे कृष्णमाल्यानुलेपने ॥ तरुण्यौ रूप संपन्ने ममालम्ब्यकरावुभे। हसंत्यौ च रुदंत्यौ च नैर्ऋती दिशमीयतुः ॥ शृणु चान्यं पुनःस्वप्नमागामिभयशंसिनम्। स्वप्ने मया भानुबिम्बं द्विविधं समदृश्यत ॥१५॥ राहुद्वयपरिग्रस्तं परिवेषद्वयावृतम्। चंद्रोदयः पश्चिमायां राहुग्रस्तो वरानने ॥ अगाधे निर्जले घोरे सर्पवृश्चिकसंकटे। निरालम्बे निराधारे तृणवीरुत्समावृते ॥ निपात्यमानमात्मानं दृष्टवान् तनुमध्यमे। रक्तानुलेपमाल्याभिश्चण्डालीभिर्भयाकुले ॥ कूपे तत्रोषितं घोरं मया द्वादशवत्सरम्। तत्र मे रक्षकः कश्चिच्चण्डालो भृशदारुणः ॥ केनचिद्योगिवर्येण कोशो मेऽपहृतो बलात्। छत्रं च चामरं चैव हेमदर्पणमेव च ॥२०॥ चूडारत्नं महद्दिव्यं धृतं मूर्ध्नि चिरं मया। सौवर्णभाजनं मह्यं हय उच्चैःश्रवोपमः॥ गजो मे राजयोग्यश्च शिबिकाच धृता चिरम्। सर्वमेतच्चापहृतं तेन योगीश्वरेण तु ॥ रत्नं किंचन मे हस्तात्सर्पः कश्चिदपाहरत्। सव्येतराद्भुजात्काचिन्निर्गत्य मम रूपिणी ॥ श्यामा रूपगुणोपेता पद्मस्था श्रीरिवापरा। अनुयाति द्विजं कंचित्*पतितो गोमयह्रदे ॥ वज्रा

हतं गृहं पश्चाद्विशीर्णं पतितं भुवि । हेमरत्नमयादुच्चैरासनात्पतितो-स्म्यहम् ॥२५॥ एतस्मिन्नंतरे विप्रः स्वप्ने चागत्य कौशिकः । अथा चद्भाजनं हैमं भुज्यमानं मया निशम् ॥ भृंगारकं च सौवर्णं राज योग्यानि यानिच । एतत्सर्वं मयादत्तं यष्टुकामाय शोभनम् ॥ ततोऽपरं श्रुणु स्वप्नं मया दृष्टं महद्भयम् । मध्याह्नार्कप्रतापेन पर-तेजोपमर्दिना ॥ शातकुम्भेन महता प्रकारेण सुवर्चसा । पञ्चतालो-न्नतेनैव नवरत्नप्रभावता ॥ संवीतं खचरं सम्यक् आखातैः परितो-वृतम् । वैदूर्यमुक्तारचितैः गोपुरैश्चातिशोभितैः ॥३०॥ स्थगितार्कपथैः शुभ्रैः शोभनैरुपशोभितैः । द्वारैश्चतुर्भिर्विस्तीर्णैर्जाम्बूनदकपाटकैः ॥ हेषारवैर्घोटकानां मत्तमातङ्गबृंहितैः । श्रुतिस्वनैर्द्विजेद्राणां गीति-माधुर्यनिस्वनैः ॥ रूपयौवनलावण्ययोषिद्भूषणसिंजितैः । कल्प-द्रुमनिभैर्भौमैः पक्षिजालसमाकुलैः ॥ देवांगनासमानाभिः रूप-लावण्यसंपदा । वनिताभिः परिवृतं चत्वरापणशोभितम् ॥ पुरं देवपुरप्रख्यं विरिंचिपुरसंनिभम् । तन्मध्ये मेरुसङ्काशो मया दृष्टो गिरीश्वरः ॥३५॥ दृष्टपूर्वश्चंद्रवति श्रुतपूर्वोऽपि न क्वचित् । तन्मस्तके विशालायां शिलायां महदद्भुतम् ॥ दिव्यं सिहासनं दृष्टं दिव्यरत्न विभूषितम् । तत्राहमुपविष्टोऽस्मि त्वया सह सुलोचने ॥ मुक्ता माणिक्यनद्धेन हेमदण्डेन शोभिना । छत्रेण ध्रियमाणेन शोभमानस्त दासने ॥ सुलोचना(धूय)वीज्यमानव्यजनैरुपशोभितः । तनुमध्या धूयमानचामरैरुपशोभितः॥ यावदग्निश्च वायुश्च यावदिन्द्राश्चतुर्दश । तावत्तत्राहमवसं त्वया साकं शुचिस्मिते ॥४०॥ विश्वामित्रं शप्तुकामं दृष्ट्वा चाभ्युत्थितस्ततः । गृहीतशापकं क्रुद्धं मंदारसमलोचनम् । दृष्टमेवं मया स्वप्ने दैवं हि दुरतिक्रमं ॥ मार्कण्डेय उवाच— श्रुत्वा सुभाषितं पत्युः चन्द्रवत्यातिदुःखिता । पातिव्रत्यसमाचारात्सर्वज्ञा सर्वदर्शिनी ॥ संपद्विपद्धैर्यसारा भर्तृशोकाविनाशिनी । त्रैशंकवं प्रत्युवाच दिशंती धैर्यमुत्तमम् ॥ चन्द्रवत्युवाच— एवमेतन्महाराज

यदुक्तं हि त्वयानघ। अवश्यं व्यसनं घोरं भविष्यति न संशयः॥ दृष्टमेतत्स्वप्नफलं अनुभूतं मया पुरा। भ्रातुर्ज्येष्ठस्य मे राजन् शिबेरौशीनरस्यच ॥४५॥ अश्वमेधेन यजतस्तस्याभूद्विपदुत्तमा। इन्द्राग्निभ्यां सुखोदर्का देहव्ययकरी नृप॥ अनेन स्वप्नदोषेण तव भावि महद्भयम्। त्वया च श्रमदृष्टेन सुखोदर्कं भविष्यति॥ मार्कण्डेय उवाच— एवमुक्ते तया राज्या सूर्यवंशार्णवोडुराट्। राजचन्द्रो हरिश्चन्द्र. पुनरूचे स्म तां प्रियाम्॥ प्रत्यूषे वायसाः स्थित्वा सूर्योन्नतमुखाः शुभे। व्याहरन्ति महाघोरं गोपुरेषु गृहेषु च॥ महोल्का प्रपतंत्युर्व्यां सूर्यमाहत्य भीतिदा.। गृहे सदा वसंत्युग्रा उदीच्यां दिशि गोधिकाः॥५०॥ निर्घातश्च महान् घोरो दिग्दाहोऽतिभयावहः। वामनेत्रान्तांसबाहु स्फुरणं मम जायते॥ दुःस्वप्नदुर्निमित्तैश्च महोत्पातैर्महद्भयम्। भविष्यति न संदेहो दिष्टं हि बलवत्तरम्॥ चन्द्रवत्युवाच— तवापि जन्मनक्षत्रे वक्रमङ्गारकः स्थितः। मन्दो वसति तत्रैव चाष्टमे चन्द्रमाः स्थितः॥ जन्मास्थितौ मन्दभौमौ सप्तमस्थो दिवाकरः। राहुश्च नवमः शुक्रः षष्ठे चाशुभदो ध्रुवम्॥ एष चैवोपघातस्ते विपरीतः समुद्भवः। याहि शीघ्रं गृहं राजन् गुरुवाक्यपुरस्सरम्।५५॥ अस्तं न यावदभ्येति भानुमान् लोकपावनः। जपैर्नियमदानैश्च लक्षहोमैर्विधानतः॥ कोटिहोमविधानेन विप्राणां भोजनेन च। गवां कोटिप्रदानेन दानैरुच्चावचैरपि॥ अलभ्यं लभ्यते मर्त्यैरसाध्यं साध्यते तदा। नक्षत्रग्रहपीडा च शान्तिमायाति भूपते॥ व्याध्यादिरोगा नश्यन्ति रक्षोभूतगणास्तथा। डाकिन्याद्या ग्रहास्सर्वे पिचाशप्रेतगुह्यकाः॥ सर्वाण्येतानि नश्यंति नित्यं भोजयतो द्विजान्। विप्रान् भोजयतो नित्यं किं न साध्यं हि भूमिप॥६०॥ यं यं कामयते कामं तं तं प्राप्नोति मानवः। भोजयन् ब्राह्मणान्नित्यं शुचीन्वेदविदो ध्रुवम्॥ (दैवं पुरुषकारेण निवर्तयितुमीश्वरः। विपत्समागता मूर्ध्नि पादयोः सा समाप्यते॥

परिहारेण होमेन ब्राह्मणानामनुग्रहात्। दैवं पुरुषकारेण निवर्तयितु-
मर्हसि ॥ यद्भावि तद्भवत्येव यदभावि न तद्भवेत्। भावाभाव
विधिस्त्वेवं संसारे दुरतिक्रमः ॥ तस्माद्भद्रं पुरस्कृत्य गुरुवाक्य
प्रमाणतः। सत्यवाक्यं पुरस्कृत्य विधिवद्युक्तमाचर॥६५॥ भवितव्यं
पुरस्कृत्य सुधीः पौरुषमाचर। चरन्वै मधु विन्देत चरन्वै सुखमश्नुते।
चरन सर्वमवाप्नोति चरन् स्वर्गं समश्नुते। अचरन् क्षरते मर्त्यो
वल्मीकमिव वृष्टिभिः ॥ पराधीनपरं मर्त्यं लक्ष्मीरव्यवसायिनम्।
उपगूहति नो वृद्धं श्यामिव जरठं पतिम् ॥ गुरुवाक्यं पुरस्कृत्य
ब्राह्मणातिथिपूजकः। नाशयित्वाऽऽशु पापानि प्रयातिस्म
त्रिविष्टपम् ॥ तारयन्त्यापदो विप्राः धनभोजनमानिताः। गोभू
हिरण्यकन्याभिर्गजधान्यान्नदानकैः। निर्हरन् सर्वपापानि श्रेयो
राज्यमवाप्नुहि ॥७०॥ मार्कण्डेय उवाच— इत्युक्तो राजराजेन्द्रो
हरिश्चन्द्रस्स्वभार्यया। प्रक्षाल्यपादावाचम्य दुःस्वप्नाद्युपशान्तये ॥
दुःस्वप्नाद्युपशान्त्यर्थं ऐन्द्रं मन्त्रद्वयं (मन्त्रंपरं) जपन्। रात्रिसूक्तं
जपन् हुत्वा महासौरं जजाप ह ॥ औषस्यमनुवाकं च स जप्त्वा रथ
मारुहत्। दत्वा सुवर्णं विप्रेभ्यो गाश्च दत्वा सदक्षिणाः ॥ एत-
स्मिन्नेव कालेतु वागुवाचाशरीरिणी। भो भो राजन्नगन्तव्यं समा
साद्य पदं मम॥ अदृष्ट्वा मामसंभाष्य शक्तिर्गन्तुं न ते पुनः। ऋषीणा-
माश्रमान् राज्ञः प्राप्य तान्नानुमान्य च ॥७५॥ गच्छतः स्वपुरं तस्य
श्रीश्चैवायुर्विनश्यति। सुखोदर्कं परं ते मे दर्शनं राजसत्तम ॥
महता दर्शनं पुंसां महासौभाग्यभोगदम्। श्रुत्वेति वियतो वाणीं
राजाऽभूद्विस्मयाकुलः ॥ कस्येयं वागनन्तस्य किमग्नेः पवनस्य वा।
इन्द्रस्य वा यमस्यापि श्रीदस्य वरुणस्य वा ॥ विश्वामित्रमुनेर्वापि
भयशोकसुखप्रदा। नूनं भवेदियं तस्य महर्षेश्चेश्वरस्यच। सदा
कोपनशीलस्य नान्यस्येदं वचो भवेत् ॥ मार्कण्डेय उवाच—
चिन्तयन्तं पुनर्वाणी सुरसद्मसमुद्भवा। उवाचास्यवनस्याह देवता

भक्तभाग्यदा ॥८०॥ अप्रीणयित्वा मां राजन् मा गच्छ गृहमात्मनः। तां महाबलिपूजाभिः कुरु राजन् सह स्त्रिया ॥ श्रुत्वेति प्रीतिमान् राजा पत्न्या साकमरिन्दमः। दिव्यशाकान्नदानैश्च परमान्नस्य राशिभिः ॥ उच्चावचैर्भक्ष्यभोज्यैः दधिक्षीरघृतादिभिः। देवतास्ताः प्रीणयितुं समाहूता मुनीश्वराः ॥ सपत्नीकाः समागच्छन् हरिश्चन्द्रेण भूमिप। तस्मिन्नेव क्षणे *तस्य नानारूपा महोद्धताः॥ दिव्यसत्व बलोपेताः दिव्याभरणभूषिताः। दिव्यमाल्यानुलेपाश्च दिव्यायुध शरासनाः॥८५॥ दिव्याश्चर्यमया भीमाः सूर्यपावकवर्चसः। ब्राह्म्यादि सप्तमातृभ्यः स्त्रीपुंरूपाः पृथक् पृथक् ॥ तत्तत्संख्यास्यनयनास्तत्तद्वाहनसंस्थिताः। तत्तद्वरायुधधराः मदक्लीबा मदोद्धताः ॥ एते चान्ये तदनुगा द्वात्रिंशत्कोटिसंख्यया। आगता भोक्तुकामास्ते ब्रह्मांड-ग्रासगृध्नवः ॥ एतान्नृपस्समालोक्य धीराणामग्रणीस्तदा। बुद्धिमान् धर्मनिष्ठश्च गां वसिष्ठस्य सोऽस्मरत् ॥ स्मृता सा गौर्नृपा-भ्यांशं तदिष्ट साऽददत्तदा। भुक्त्वा तृप्तास्ततस्सर्वे ऋषयोऽपि सदारकाः ॥९०॥ सुतृप्ताश्च सुदृप्ताश्च सुपुष्टाः सप्रिया नृप। नृपस्य पश्यतस्तस्य चन्द्रवत्यास्तथैव च ॥ तत्सूनोरोहिताश्वस्य सत्यकीर्ते-स्सुमन्त्रिणः। अन्तर्दधुर्नृपश्रेष्ठ ते देवा देवताश्च ताः। प्रीणयित्वा सुरगणान् राजा स्वरथमारुहत् ॥९२॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने षष्ठोऽध्यायः ॥

## सप्तमोऽध्यायः ॥७॥

मार्कण्डेय उवाच— एतस्मिन्नेव काले तु विश्वामित्रो महा मुनिः। मनसा मायया सृष्ट्वा चण्डालवपुषान्विते ॥ रूपेणाप्रतिमे लोके कर्णान्तायतलोचने। वृत्तपीनोन्नतकुचे चम्पकादामबाहुके ॥ नितम्बविस्तारभरे विपुलश्रोणिमण्डिते। रंभास्तम्भसमानोरू स्मर तूणीरजंघके ॥ कूर्मपृष्ठप्रपदके पक्वबिम्बफलाधरे। वपाश्रपणीकुसुम-

समनासाग्रशोभिते ॥ अष्टमीचन्द्रविलसल्ललाटतिलकोज्वले । राका शशाङ्कवदने अनर्घ्यस्निग्धकुन्तले ॥५॥ योगीन्द्रमुनिमोहिन्यौ मोहदे मदनस्यच । अनुमेयसुमध्यंच मुक्काताटंकशोभिते ॥ कांत्या मरकतश्यामे वयसा षोडशान्विते । दृष्ट्वैव कन्यके द्वे ते राजन् प्रोवाच कौशिकः ॥ कुरुतां मम सांनिध्ये वाक्यं मत्प्रीतये सुते । स कुप्येत यथा राजा तथेदं वाच्यतां शुभम् ॥ राजचिह्नं राज योग्यं राजवंशक्रमागतम् । दातव्यं च सितछत्रं चामरव्यजने उभे ॥ अदेयं यद्भवेद्वस्तु प्रार्थनीयं तदेवहि । कृत्वा कृत्यमिदं बाले शीघ्र-मागंतुमर्हथः ॥१०॥ उक्ते ते मुनिनैवं तु पितुराज्ञापुरस्सरम् । जया च विजयानाम प्रापतुर्नृपमुत्तमम् ॥ शान्तं दान्तं जितक्रोधं गम्भीरार्णवसन्निभम् । अक्षोभ्यं करुणासिन्धुं धैर्येण हिमवन्निभम् ॥ प्रतापे वह्निसङ्काशं प्रसादे शशिसन्निभम् । धर्मेण सदृशं धर्मे सत्यं मूर्तमिव स्थितम् । तं प्रणम्योचतुःकन्ये स्थित्वा दूरे श्रमान्विते ॥ कन्यके ऊचतुः— त्वं हि राजन् जगत्राता सर्वभूतदयापरः । अनाथ प्राणिसुखदः प्रपन्नक्लेशनाशनः ॥ उष्णेनावामाकुलिते चातपेन भृशाकुले । सर्वेषां सर्वदो नित्यं त्राता भव जनाधिप ॥१५॥ यदेतत्स्वर्णदण्डं च चन्द्रमण्डलसन्निभम् । मुक्तावैदूर्यमाणिक्यपद्म-रागादिभूषितम् ॥ दिव्यपट्टपरीधानं गन्धमाल्यैरलंकृतम् । आव-योर्दीयतां छत्रं करे भानुप्रतप्तयोः ॥ मार्कण्डेय उवाच— श्रुत्वा तद्वचनं राजा कटाक्षेण निरीक्ष्य च । ज्ञात्वा चण्डालवपुषौ संनिरीक्ष्य विभावसुम् ॥ आचम्य प्रयतो भूत्वा हस्ताङ्गुल्या प्रचोदयत् । ते पुन श्चोचतुर्भूपं विषमेण समाधिना ॥ प्रत्याख्यानं न कर्तव्यं तीव्रस्तपति भास्करः । तप्येते नौ शरीरेऽहो ग्रीष्मे कुसारितो यथा ॥२०॥ द्रष्टव्ये च सुसंभाष्ये पुत्र्यौ वो दीयतां नृप । आवयोर्भाषणे दृष्टे तव दोषो न विद्यते ॥ दीयतां छत्रमेकस्याः अपरायाः प्रकीर्णकम् । नोचेदावां मरिष्यावः स्त्रीहत्यां समवाप्नुहि ॥ सत्यकीर्तिरुवाच—

स्त्रियावेते महाराज जात्या हीने भविष्यतः। आगते कन्यके तात इति मे निश्चिता मतिः॥ नहि ताभ्यां वचो ब्रूहि महान् दोषोऽभिजायते। इदं रूपमियंकान्तिरियंमूर्तिरिमे ध्रुवम्॥ चण्डालजाति संभूते नूनं भूप भविष्यतः। उक्त्वैवं नृपति मन्त्री ते कन्येचाभ्यभाषत ॥२५॥ सत्यकीर्तिरुवाच— यो राजा पृथिवी शास्ति चातुर्वर्ण्यपुरस्सराम्। सप्तद्वीपार्णवयुतां तेनेदं धार्यते शुभे॥ छत्रं च चामरं चैव सिहासनमनुत्तमम्। एतानि त्रीण्यदेयानि कस्मैचिच्छासता महीम्॥ कन्यके ऊचतुः— वर्णानामाश्रमाणां च प्रजानां परिपालनम्। राज्ञो धर्मं प्रशंशन्ति ह्यापद्धर्मोऽन्य उच्यते॥ त्यागिनः किं विचारेण गुणवन्निर्गुणेष्वपि। नहि संहरति ज्योत्स्नां चंद्रश्चंडालवेश्मसु॥ निर्गुणेष्वपि सत्वेषु दयां कुर्वन्ति साधवः। समं वर्षति पर्जन्यः सस्येष्वपि तृणेष्वपि॥३०॥ विशेषात्स्त्रीषु सन्नासु दयां कुर्वन्ति भूमिपाः। अदेयं विद्यते नैव राज्ञां सन्नेषु भूमिप॥ गरीयः किं शरीरात्तु छत्रादिकमनुत्तमम्। एतत्सर्वं शरीरस्य रक्षार्थं सञ्चितं नृपैः॥ अदेयं नास्ति तल्लोके त्यागिनां भूमिवल्लभ। स्वदेहमपि तत्याज नागानन्दः शिबिर्नृपः॥ तस्माददेयं नास्त्येव वदान्यस्य महीपतेः। आवाभ्यां दीयतां छत्रं चामरं तापशान्तये॥ मार्कण्डेय उवाच—उक्तस्सताभ्यां तन्मन्त्री कोपात्संरक्तलोचनः। निर्बन्धात्प्रतिहंतव्ये इत्यवोचन्नृपोत्तमम्॥३५॥ मंत्रिण्यथैवमुक्ते तु राजा वचनमब्रवीत्। अयुक्तमीदृशं वक्तुमदेयं दीयतामिति॥ किमन्यद्वस्त्ररत्नानि मणिकांचनभूषणम्। मया युवाभ्यां दातव्यं वदतं दीयते मया॥ श्रुत्वैवं नृपतेर्वाक्यं पुनस्ते चोचतुर्नृपम्। क्षमावन्तं दयावन्तं सदा दाक्षिण्यशालिनम्॥ क्षुधितेभ्यो·दद स्वान्नं क्षुन्न नश्यति वारिणा। तृषा विमुह्यतां तोयं तृष्णा तोयेन नश्यति॥ अग्निःस्याच्छीतशान्त्यै च व्याधिशान्त्यै महौषधम्। यद्दखं या विपल्लोके तस्य तस्य प्रतिक्रिया॥४०॥ धात्रा सृष्टा

महीपाल यद्युक्तं तत्समाचर । वर्षातपपरित्राणं छत्रमाहुर्मनीषिणः । तत्परित्राणकं भूप देहि नौ मान्यवस्तु यत् ॥ मार्कण्डेय उवाच— इतिनिर्बन्धसंजातरोषरक्तविलोचनः । कशया ताडयामास चोभे चण्डालकन्यके ॥ ताडिते तु ततो गत्वा रुदन्त्यौ कुशिकात्मजम् । क्रोशन्त्यौ पेततुस्तस्य पादयोः पृष्ठताडिते ॥ कशया ताडिते तात हरिश्चन्द्रेण ते सुते । पृष्ठयोरावयोः पश्य कशाघातव्रणं मुने ॥ त्वयि नाथे स्थिते तेन ताडिते चह्यनाथवत् । यस्याभिधानश्रवणा त्त्रैलोक्यं कम्पते भिया । आवां तव सुते तस्य कांदिशीके त्वयि स्थिते ॥४५॥ मार्कण्डेय उवाच— तच्छ्रुत्वा वचनं ताभ्यां प्रज्वलन्निव मन्युना । क्रोधरक्तान्तनयन इद वचनमब्रवीत् ॥ मद्वचः श्रृणुतां पुत्र्यौ विश्वामित्रो ह्यहं यदि । मदप्रियकरं स्वर्गात्पातयेयं च वासवम् ॥ हरिश्चन्द्रं किमु सुते मत्कोपाग्निपतंगकम् । रोदितव्यं युवाभ्यां च न तथा मां निरीक्ष्य च ॥ इत्याश्वास्य सुते चोभे राजानं दूरसंस्थितम् । अवोचदूर्ध्वमालोक्य कोपात्प्रस्फुरिताधरः ॥ श्रृण्वन्तु लेखा मुनयो भूतान्यंतर्हितानि च । अशास्त्रीयमिदं लोके सद्भिश्चापि विगर्हितम् ॥५०॥ सर्वदोषाकरां वापि सर्वपापस्वरूपिणीं । पतिघ्नीं च सुरापां च स्त्रियं दण्डेत भूमिपः । यस्सामान्यस्त्रियं हन्यात् भ्रूणहा स निगद्यते । शतापराधिनी योषां स्वराष्ट्राद्विप्रवासयेत् ॥ शिक्षयेत स्त्रियं स्त्रीभिः पुरुषैर्न कदाचन । सामान्यमेतच्छास्त्रीयं लोके सद्भिरनुष्ठितम् ॥ विशेषतो मम सुते याचमाने च किंचन । तथैवानपराधिन्यौ निष्पापे निरुपद्रवे ॥ मन्नाथेऽताड यद्राजा कशयाऽनाथवत्स्वयम् । धर्मज्ञस्सत्यवादीच दयावान् सर्व जन्तुषु ॥५५॥ कार्याकार्यविदव्यग्रः वदान्यः सत्परिग्रहः । एवमादिगुणोपेतो लोकेषु परिगीयते ॥ स राजा कृतवानित्थं विद्वच्छास्त्र विगर्हितम् । तं पातयाम्यहं पापं दुरन्ते शोकसागरे ॥ क्लेशैरुच्चा वचैश्चैव नानोपद्रवकोटिभिः । सद्यामह्यतरैर्घोरैर्दुःखैरामरणान्तकैः ॥

कोहि नाम पुमान् लोके मम विप्रियकृन्नरः। निर्गच्छेदाश्रमादस्मा-ज्जीवन्नपि शचीपतिः॥ पातालानि प्रविशतु सप्तभूरादिकानपि। शरणं यातु देवां स्त्रीन्पातयाम्यहमञ्जसा॥६०॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने सप्तमोऽध्यायः॥

---

## अष्टमोऽध्यायः ॥८॥

मार्कण्डेय उवाच— श्रुत्वा मुनीरितं वाक्यं श्रुतमात्रेण मृत्युदम्। धीराणामग्रणीराजा दध्यावात्मनि कौशिकम्॥ विश्वामित्राश्रमे राजन्न गन्तव्यं कदाचन। इत्थं निवारितस्तेन वसिष्ठेन महात्मना॥ मया मूढात्मना चैव दैवापहृतचेतसा। अनादृत्य वसिष्ठोक्तिं गतं तत्र करोमि किम्॥ उक्त्वैवमादि स नृपो दिव्यशक्त्युपबृंहितः। तपोवीर्यबलोपेतो भार्यामिदमुवाचह॥ अपराधो न मेऽस्तीह शापं तस्याददामि वा। शक्तिरस्ति च मे शप्तुं तस्य शापं ददामि वा॥५॥ चन्द्रवत्युवाच— शप्तुं नास्ति च ते शक्तिरास्तिचेदपि भूमिप। अयुक्तमिदमस्माकं ब्राह्मणे ब्रह्मकोविदे॥ शापोप्यस्थान दत्तश्चेद्दहेदात्मानमेव च। तन्नदातुं ब्राह्मणेभ्यश्शापं युक्तं महीपते॥ शापे तु भृगुणा दत्ते पदा चोरसि ताडिते। दुर्वाससा तदा शप्ते हरिः किं वाऽशपत्तदा॥ प्रतिशापो हि दत्तः किं हरिणा भृगवे पुरा। शक्तोऽपि क्षान्तवान्विष्णुः भृगुशापं पुरा किल॥ आकृष्य ताडितो वापि शप्तो वापि द्विजन्मना। क्षमावान् बाहुजो भूयात् क्षत्रं ब्रह्म पुरस्सरम्॥१०॥ ब्रह्मशापं पुरा सोढ्वा ययातिः सुरसन्नमः। अद्यापि न प्रच्यवते देवेशसमभोगवान्॥ तस्मात्क्षमस्व भूपाल शापं भूसुरकोपजम्। किंचाद्भुततपोवीर्यो विश्वामित्रोऽन्यतापसः॥ त्रैलोक्यसृष्टिमपरां कर्तुं शक्नोति मानद। तस्मात्स्पर्धस्व मा तेन ब्रह्मण्या भव सर्वदा। स सान्त्व्यमानो भूपालः स्वदेव्या धर्मशीलया। दैवाधीनं जगत्सर्वं ज्ञात्वा पुनरभाषत॥ हरिश्चन्द्र उवाच—

पुरुषो नातिवर्तेत दैवं तद्बलवत्तरम्। येन यत्रापि भोक्तव्यं शुभं वाऽशुभमेव वा ॥१५॥ स तत्र नीयते रज्वा बलादिव विधेर्बलात्। अगाधेऽपि जले मत्स्यश्चरन् काले समागते॥ निरापराधी वध्येत कालेनांतकरूपिणा। अनेकयोजनशतात्खेचरः खेचरो वने॥ अनेककालसंतुष्टः यत्र पाशशतावृतम्। आमिषं स्वयमेवाशु तद्गृध्नुः पतितोऽवशः॥ रसनारससंमूढः पाशबन्धं न पश्यति। अपारसत्वबलवान् गजो वन्योऽपि बध्यते॥ सूर्याचन्द्रमसौ पश्य प्रिये कालवशानुगौ। यातोऽस्तमुदयं चापि तिष्ठतो न क्षणं क्वचित् ॥२०॥ सोऽहं दैवपरीतात्मा वार्यमाणो महात्मना। विश्वामित्राश्रमं प्राप्तः शलभः पावकं यथा॥ एवं दैव्यागते काले गमिष्यामि तपोवनम्। अवश्यमेव गन्तव्यं देववर्त्मनरेण ह॥ मार्कण्डेय उवाच—इत्युक्तवति राजेन्द्रे यातुकामे मुनीश्वरः। स्वयमेव तदा योगी प्रादुरासीत्तपोधनः॥ कन्यकाभ्यामनुगतो विशाखाभ्यामिवोडुराट्। दृष्ट्वा तं मुनिमायान्तमभ्युत्थाय कृताञ्जलिः॥ सार्घ्यपाणिः सपत्नीकः सपुत्रः सहमन्त्रिणा। हेमभृङ्गारमादाय पूर्ण परमवारिणा ॥२५॥ प्रत्युद्गम्य च गाधेयं प्रणम्य च पुनःपुनः। प्रक्षाल्य पादौ तोयेन दत्वाऽऽसनपरिग्रहम्॥ अर्घ्यं गां च निवेद्याथ विधिवच्छास्त्रवर्त्मना। पृष्ट्वा सानुनयं प्रीतः तपसां निधिमाश्रमे॥ अतिष्ठत्प्राञ्जलिःपश्यन्मुनीन्द्रप्रवरं तदा। विद्युत्पिगातिदीर्घाभिः जटाभिरुपलक्षितम्॥ त्रियक्त्रिपुण्डविलसल्ललाटतिलकोज्वलम्। कृष्णाजिनोत्तरासङ्गं शुभ्रयज्ञोपवीतिनम्॥ कमलान्तरगौराङ्गं सुवर्णफलकोरसम्। आजानुबाहुं सुग्रीवं सुललाटकपोलकम् ॥३०॥ ईषल्लम्बितकर्णाग्रं मांसलांसभुजद्वयम्। वृत्तायतांगुलिकरमुरस्तुल्योरुदामकम्॥ नातिदीर्घोरुजंघाङ्घ्रिं मांजिष्ठारुणवाससम्। अन्तःकृपामहाम्भोधिं बहिःकोपभयानकम्॥ अन्तर्भावविवक्षास्यं स्फुरदोष्ठपुटद्वयम्। निश्चल-

न्मौक्तिकाभास्वद्दन्तपङ्क्त्या विराजितम् । पश्यन्पुरोवतिष्ठत्तं पुत्रस्त्री मन्त्रिसंयुतः ॥३३॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने अष्टमोऽध्यायः ॥

---

## नवमोऽध्यायः ॥९॥

मार्कण्डेय उवाच— शृणु राजन् कौशिकस्य वृत्तान्तं क्रूरनिश्चयम् । समालोक्य हरिश्चन्द्रमापादतलमस्तकम् ॥ राजानं कम्पयन् रोषा दमर्षायितलोचनः । ऊर्ध्वत्रिवक्रभ्रुकुटिर्भूपालमिदमब्रवीत् ॥ विश्वामित्र उवाच— भो भो राजन्नाश्रमोऽयं मम क्रोधविवर्जितः । विनीतसत्वसंपन्नः शरण्यः सर्वदेहिनाम् ॥ राजन् वनान्तरमिदं अत्र कोपो न विद्यते । कथमाश्रममात्मीयं मां च ज्ञात्वा प्रविश्य च ॥ इमे च मत्सुते ज्ञात्वा दयां संत्यज्य जन्तुषु । मामनादृत्य सुतयोः कथं दण्डं प्रयुक्तवान् । आज्ञेयं किं कृता भूप सामर्थ्यं किं त्वया कृतम् ।५॥ हरिश्चन्द्र उवाच— मुक्ताविद्रुमवैदूर्य क्षौमालङ्कारभूषणम् । अमृतास्वादमाहारं निराकृत्य सुते तव ॥ उपायेनैव विप्रेन्द्र मद्राज्यहरणोद्यते । सर्वलक्षणसंपन्नं सर्वालङ्कार शोभितम् ॥ सूर्यान्वयसमुद्भूतैर्भूपालैः पूजितं सदा । मनुप्रभृति भूपालपारंपर्यक्रमागतम् ॥ गन्छेद्येन जरा जैत्रं छत्रमेतदयाचताम् । अस्मिन् छत्रे त्वपहृते हृतं राज्यं न संशयः ॥ राज्यं कोशो बलं ब्रह्मन् अहो तद्राज्यलक्षणम् । छत्रं च चामरे चैव सामान्यं पद लक्षणम् ॥१०॥ पृथिव्यां सागरान्तायां इक्ष्वाकूणां क्रमागतम् । प्रतिषेधयतो मेऽद्य हर्तुमेते समुद्यते ॥ उपच्छंदयमानंच विषमेण समाधिना । राज्यापहारिणं क्षत्रं समरे चाततायिनम् ॥ गोब्राह्मणानां हन्तारं हन्यादेवाविचारयन् । राज्यापहारिणी चोरा सर्व प्राणिवधोद्यताम् ॥ त्वत्प्रेरितो दाशरथिः ताटकां हि निजघ्निवान् । भृगुपत्नीं हरिर्जघ्ने हनूमान् सिंहिकां तथा ॥ एवं प्रजाहितकरा.

स्त्रियो हत्वा नृपोत्तमाः । जुगुप्सुश्च प्रजाधर्मं ब्रह्मन्नेवं कृतं मया ॥१८॥ किं चेमे कन्यके ब्रह्मन् जात्या चण्डालयोनिजे । अदर्शनीयेऽसंभाष्ये कथं ते भवतां सुते ॥ दुष्प्रतिज्ञामिमां त्यक्त्वा जातिभ्रंशकरां द्विज । शान्तो भव त्यज स्पर्धां शान्तिर्हि मुनिलक्षणम् ॥ साम्ना दानेन भेदेन मया च प्रार्थितं मुहुः । छत्रापहरणाद्युक्ते तदा दण्डं प्रयुक्तवान् ॥ मार्कण्डेय उवाच— निशम्य वाच भूपस्य धर्माचारसमन्विताम् । विचार्यात्मनि भूपाल कौशिकः पुनरब्रवीत् ॥ विश्वामित्र उवाच— अयुक्तं कृतमेताभ्यां यच्छत्रं प्रार्थितं तव । स्थाने कोपस्ततो राजन् कृतोयस्त्वनयोस्त्वया ॥२०॥ अयुक्त कृतमेताभ्यां यच्छत्रं प्रार्थितं तव । अप्रार्थनीयमेतच्च प्रार्थनीयमिति प्रभो ॥ अदेयं देयमिति च कार्याकार्ये च या मतिः । सा मतिर्विद्यते नैव यस्मात् स्त्रीत्वमनर्थकम् ॥ तच्छृणुष्व महीपाल दण्ड्या राज्ञा महीतले । द्रव्येण ताडनेनैव छेदनात्करपादयोः ॥ कारागार निवासेन *शृंखलापाणिपादयोः । शूलशल्याग्रवासेन प्राणान्तकरणैस्तथा ॥ स्वस्ववर्णपरिभ्रष्टाः जातिभ्रंशकराः खलाः । परदार परद्रव्यपरक्षेत्रापहारिणः ॥२५॥ वनचोरा ग्रामचोरा मार्गचोरा दिवानिशम् । राजाज्ञादूषकाश्चैव राजद्रव्यविघातकाः ॥ राज्यकण्टकिनश्चैव ग्रामकण्टकिनस्तथा । दुराचाराश्च कुहकास्तथा सङ्कीर्णमैथुनाः ॥ स्वस्वजातिसदाचारदूषकाःपरदूषकाः । नानोपायात्परप्राण द्रव्यदारापहारिणः ॥ एते चान्ये च ये चोरा. दण्ड्यास्ते राजसत्तम । पुत्राणां च पिता शास्ता शिष्याणा गुरुरात्मवान् ॥ स्त्रीणा शास्ता पतिर्भूप नैतेषां शिक्षकोऽपरः । अहं शास्ताऽनयोर्नान्यो मत्सुतेऽभवतामिमे ॥३०॥ मामनादृत्य कस्मात्त्वं घोरं दण्डं प्रयुक्तवान् । त्वदृतेऽन्यमहं लोके ममानिष्टकरं नरम् ॥ पातयाम्याशु तपसा साक्षादपि सुराधिपम् । अपराधं च कोपं च त्वदनीतिसमुद्भवम् ॥ क्षमिष्येऽहं महीपाल तत्कुरुष्व मम प्रियम् । भवतोऽपि हितं चैव कुशलं

तव मे प्रियम् ॥ एते मम सुते राजन् तपस्तप्त्वा मया चिरम्। वरप्रदानाद्रुद्रस्य मनसा निर्मिते मया ॥ गृहाणपाणिमनयोस्सुतयोर्मम भूमिप। सफलं तव जन्मस्या(दन)दावयोश्च महत्प्रियम् ॥३५॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने नवमोऽध्यायः ॥

## दशमोऽध्यायः ॥१०॥

मार्कण्डेय उवाच— अश्राव्यं तद्वचः श्रुत्वा विषमाक्षरसंयुतम्। कर्णौ पिधाय पाणिभ्यां विश्वामित्रमुदैक्षत ॥ पश्य देव मुनेः क्रौर्यं पूर्वजात्युचितं खरम्। उत्तरं किं वदाम्यस्य पश्यास्मद्विधिमागतम् ॥ इत्युक्त्वा हृदयेऽखिद्यद्दह्यमान इवाग्निना। कोऽयं मुनेः स्वभावोऽयं इति चिन्त्य तमब्रवीत् ॥ हरिश्चन्द्र उवाच— किमुक्तं भवता ब्रह्मन् सर्वज्ञेन महात्मना। किमेते भवतःपुत्र्यौ किमतस्ते परं यशः ॥ तव भाग्यस्य सदृशं नास्त्यस्मिन् भुवनत्रये। चण्डालजातिसंसृष्टौ मनसः कीदृशी गतिः ॥५॥ चण्डालजातेः क्षत्रस्य संबन्धः संभवेत्कथम्। ब्रह्मणो वदनाज्जातास्साकं स्त्रीभिर्द्विजोत्तमाः ॥ नानागोत्राभिचरणास्ते विवाह्याः परस्परम्। ब्राह्मणस्यानुलोमेन विवाहो विद्यते त्रिषु ॥ क्षत्रियादिषु वर्णेषु क्षत्रियस्य द्वयोस्तथा। वैश्यस्य शूद्रे शूद्रस्य विवाहः शूद्र एव च ॥ शूद्रस्य वैश्ये वैश्यस्य क्षत्रे क्षत्रस्य वै द्विजे। प्रातिलोम्येन जातानामुत्तरोत्तरनीचता ॥ एतेभ्यो ये च ते येभ्यस्तेभ्य एतेभ्य एव च। एवं सङ्करजन्मादि (चा) राचण्डालं प्रजायते ॥१०॥ नासृजत्सृष्टिकाले हि चाण्डाली सृष्टिमात्मभूः। सङ्करात्सङ्कराज्जाता चाण्डालीजातिरन्तिमा ॥ चण्डालस्पर्शने विप्रः पुनस्संस्कारमर्हति। संभाषायां ब्राह्मणेन संभाषताथ दर्शने ॥ ज्योतिषां दर्शनादेव तस्मात्पापात्प्रमुच्यते। तज्जातिसंभवा कन्यां परिणेष्यन्ति किं द्विजाः ॥ अन्त्यजापाणिग्रहणं न शंसन्ति भवद्विधाः। चण्डालजातिग्रहणे नियोजयासि कौशिक ॥

एतत्प्रियं कथं ते स्यान्मम चैव कथं प्रियम्। वसिष्ठस्पर्धजां त्यक्त्वा दुष्प्रतिज्ञामिमां द्विज ॥१५॥ पूजामिमां मयोद्युक्तां गृहीत्वाऽनुग्रहं कुरु। ऋते तस्मादभीष्टं ते मत्तः प्राप्नुहि कौशिक ॥ मार्कण्डेय उवाच— एतन्निशम्य वचनं हरिश्चन्द्रस्य कौशिकः। अनाधाय मनस्येतद्राजानं पुनरब्रवीत् ॥ कौशिक उवाच— ज्ञाताऽहं सर्वशास्त्राणां वक्ता शास्त्रगणस्य च। मम न ब्रूहि शास्त्रं त्वं मदुक्तं कुरु भूमिप ॥ अहं शास्ता जनस्यास्य गुरुरित्येव मंस्यथाः। मामनादृत्य कस्मात्त्वं इमे दण्डेन चावधी' ॥ पाणिं गृहाण तस्मात्त्वं सुतयोर्मे सुमध्ययोः। ततोऽहं तव सुप्रीतो भवामि रघुनन्दन ॥२०॥ एतदेव प्रियं राजन्मम नान्यत्प्रियं वसु। प्राप्तव्यं तु मयैतच्च सर्वथा मद्वचःकुरु ॥ नैते चण्डालसंभूते तनये मम सुव्रत। अनयोः पाणिग्रहणे दोषस्तव न विद्यते ॥ अहं प्रमाणं भवतो वचस्तच्छ्रद्दधस्व मे। वचो मे सर्वशास्त्रं स्यान्मन्वादिस्मृतिसंमितम् ॥ मज्जिह्वास्पन्दनं यच्च मदोष्ठस्फुरणं तथा। वेदशास्त्रपुराणानि तदेवावेहि भूमिप ॥ तस्मान्नब्रूहि मे शास्त्रं यदि जीवितुमिच्छसि। वचो मम कुरुष्वाग्र्यं न श्रोष्यसि विनंक्ष्यसि ॥२५॥ एवमुक्तस्ततस्तेन गाधिजेनाऽतिमानिना। विस्मितः स्मयनिर्मुक्तः पुनरूचे मुनीश्वरम् ॥ हरिश्चन्द्र उवाच— पुनःपुनरिदं ब्रूहि पूर्वमुक्तं च यन्मया। कोपं न याम्यहं ब्रह्मन्नयुक्तं न करोमि तत् ॥ ब्रह्मणा क्षत्रियास्सृष्टाः बाहुवीर्येण जीविनः। उद्वाह्याः क्षत्रियाःजात्या क्षत्रियैर्मार्गसंस्थितैः ॥ चण्डालकन्यके ह्येते सर्वं जात्या बहिष्कृते। एतयोर्दर्शनं स्पर्शो भाषणं च विगर्हितम् ॥ चंडालं पतितं दृष्ट्वा द्विजः पश्येच्च भास्करम्। ज्वलन्तं पावकं रात्रौ विप्रं वा वेदपारगम् ॥३०॥ अद्यैव वास्तु मरणं श्वो वा भूयान्ममाऽनघ। पक्षमासर्तुवर्षेषु न वचः श्रद्दधामि ते ॥ त्वं पुरूपा च गायत्री ब्रह्म तेजश्च मूर्तिमान्। मूर्तिमांस्तपसोराशिः पश्चात्कोटिवत्सरम् ॥ चतुर्दिक्षुच मध्येच तपस्तप्त्वा पुरा महत्। धूम्रज्वालाकुलं लोकं काल

यित्वा त्रिविष्टपम् ॥ ऋषित्वं ब्रह्मसंबद्धं प्राप्तवान् कुशिकात्मज। तपःसुचरितं तप्त्वा प्रीणयित्वाऽसुरारिणम् ॥ भृशाश्वतनयान्प्राप्तो मन्त्ररूपान् महौजसः। पुरा वसिष्ठशापेन चण्डालत्वमुपागतम् ॥ ॥३५॥ *पितरं याजयित्वा च *हत्वा वासिष्ठकान् शतम्। स्वर्लोकं प्रापयित्वा च ततस्तं यष्टुमञ्जसा ॥ अन्तरिक्षे स्थापयित्वा द्वितीयां सृष्टि*मारभत्। कस्त्वया सदृशो लोके तपसा ब्रह्मवर्चसा ॥ बुद्ध्या नीत्या च युक्त्या च सामर्थ्येन विदांवर। त्वत्त' पूज्यतमो नास्ति त्वत्तो नास्ति महत्तरः ॥ एवं प्रभावो भगवान् किं मां योजयमि प्रभो। अस्मिन्कर्मण्यधर्मे मां किनु पातयसि प्रभो ॥ शरणं त्वां प्रपन्नोऽस्मि मुंच मां यामि मे गृहम्। एताभ्यां किं च मे कार्यं एते त्यक्त्वा घृणी भव ॥४०॥ छित्वा कंटकवृक्षं न(नः) शिरस्याक्रष्टुमर्हसि। चण्डालकन्यकाभ्यां च ब्राह्मणेन तपस्विना ॥ सबन्धो दृष्टपूर्वो न श्रुतपूर्वो न हीदृशः। अकृत्ये निश्चितां बुद्धिं त्यक्त्वा कुशिकनन्दन। चण्डाल्यौ चाश्रमं ते तु पुण्यं गच्छ मुनीश्वर ॥ मार्कण्डेय उवाच— आश्वासितो नृपेणेत्थ कौशिको निर्घृणाग्रणीः। जज्वाल मन्युनाऽतीव सर्पिषेव हुताशनः ॥४३॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने दशमोऽध्यायः ॥

---

## एकादशोऽध्यायः ॥११॥

मार्कण्डेय उवाच— नृपवाग्गाज्यकोपाग्निज्वालाकुलितमानसः। कौशिको मुनिमुख्योऽसौ नृपमुख्यमथाब्रवीत् ॥ विश्वामित्र उवाच— शृणु भूपाधम वचो मम स्वकुलपांसन। श्रुतिस्मृतिपुराणानां न तत्वज्ञोऽसि कर्मणाम् ॥ बहिष्कृतस्त्वमेतेभ्यो बुद्धियुक्तिविवर्जितः। न धर्मनीतिशास्त्रज्ञः प्रज्ञावानिव भाषसे ॥ अनादृत्य च मां चैव मद्वाक्यमधमाधम। जनिष्यति भवान् केन केन राजाऽसि भूतले ॥ हरिश्चन्द्र उवाच— अयुक्तमद्य भगवन् वक्तुमर्हसि मां प्रति। नाहं

कोपस्य पात्रं ते मय्यनुग्रहवान् भव ॥५॥ किंचिच्च नापराद्धं ते इतःपूर्वं मया क्वचित्। कृते पराधेऽपि मुने क्षन्तव्यं हि भवादृशैः ॥ तपस्विनः क्षमासाराः क्षमया ध्रियते जगत्। कोपं च हेतुसंभूतं निगृह्णन्ति भवादृशाः ॥ अकारणान्मयि क्रोधः क्रियते भवता वृथा। क्षमा या सर्वभूतेषु सैव कैवल्यसाधनम् ॥ अक्षमां नरकं प्राहुः शास्त्रज्ञाश्च भवादृशाः। क्षमा तीर्थं क्षमा स्नानं क्षमा सन्ध्या क्षमा जपः ॥ क्षमा मन्त्रः क्षमा ध्यानं क्षमा यागः क्षमा श्रुतम्। गङ्गादिसर्वसरितां क्षमात्वेका विशिष्यते ॥१०॥ ब्रह्मलोकादयो लोकास्साधितास्तपसापि च। नस्युरक्षमिणस्सर्वे सुखदा इतिन श्रुतम् ॥ मोक्षह्रदस्य सलिलं क्षमैव परिकीर्तिता। दयापुलिनसंघातः दमःकच्छपसंहतिः ॥ शमो मकरसङ्घश्च तपो द्वीपं प्रचक्षते। आर्जवं सरणिर्ज्ञेया शौचं तीर्थमुदाहृतम् ॥ नौका दण्डो मुमुक्षास्यान्मैत्र्याद्या मत्स्यजातयः। यमाश्च नियमाश्चैव शैवलाब्जादयस्तथा ॥ वैराग्यश्च तदा खातं स्यादहिंसापि कौशिक। अकृत्यं कटुकं माया दुरुक्तं देहशोषणम् ॥१५॥ प्ररोहतीषुणाविद्धं वनं परशुना हतम्। दुरुक्तपरुषक्रूर वाग्घतं न प्ररोहति ॥ मार्कण्डेय उवाच— एवं तस्य वचः श्रुत्वा कौशिकः सुमहातपाः। कोपेन महता राजन् प्रजज्वालानलो यथा ॥ आस्याद्वमन्महाधूमं ज्वालाङ्गारस्फुलिङ्गकान्। दहन्निव दृशा भूपमवदद्वदतां वरः ॥ अदातुर्यत्प्रभुत्वं तु क्रोधो यश्च तपस्विनः। तावुभौ निष्फलौ लोके बालिशाचरितं त्विदम् ॥ अदातापि प्रभुर्मानी तपोमान्यऽतिकोपयुक्। तावुभौ नरकं यातश्चिरं नरकयातनाम् ॥२०॥ अदाता यःप्रभुर्लोके स्वामी यश्चाधमो (नो) भुवि। अविद्यः शिक्षको यश्च दुर्भार्यो यो गृहाश्रमी ॥ दुष्पुत्र' पुत्रवान्मानी धनाढ्यो दानवर्जितः। सविद्यो नोपदेष्टा च ह्येवमाद्या वृथा नराः ॥ एतेषु को भवान् ब्रूहि वृथा जल्पसि भूपते। अदाता च भवान् क्रोधी लोभी बालचरित्रवान ॥ एवंविधो भवान् मूर्खः

परान् दूषयति स्वयम् । दत्वा त्वं हि विकत्थस्व नो दक्षः क्षत्रियो भवान् ॥ वर्षन्मेघाः प्रवर्षन्ति निःशब्दं हि तपात्यये । गर्जन्मेघाः न वर्षन्ति वृथा गर्जन्ति निर्जलाः ॥२५॥ हरिश्चन्द्र उवाच— सर्वे ददति राजानो दातारोऽपि स्वशक्तितः । स्वस्ववित्तानुसारेण धनवानिव निर्धनः ॥ न ददाति धनी चापि न ददात्यखिलं वसु । अहं च प्रददाम्यार्य यावदिच्छसि दक्षिणां ॥ दक्षिणां कां प्रदास्यामि भवते गुरुसत्तम । अदातुर्यत्प्रभुत्वं तद्बालिशाचरित भवेत् ॥ सत्यमेतदहं जाने क्रोधलोभौ तपस्विभिः । एतदज्ञानचरितं भवत्येव हि दृश्यते ॥ बहुसौवर्णको यज्ञः पुराऽवर्तिष्ट ऋद्धिमान् । तदाऽदांच कियत्केभ्य स्तदागाः वैभवान्मुने ॥३०॥ इदानीमपि गा दास्ये या इच्छति भवांश्च ताः । सर्वान् सर्वैस्तुलयितुं नार्हसि त्वं विदांवर ॥ विश्वामित्र उवाच— ददासि चेदिमां देहि दाता चेज्जगतीतले । द्विर्वचो नाभि भाषेथाः यदि सत्यपरो भवान् ॥ बहुसौवर्णको यागः सुनिवर्तेत यावता । तावद्धनं सम्प्रयच्छ मह्यं कुशलमस्तु ते ॥ हरिश्चन्द्र उवाच- धन्योस्म्यनुगृहीतोऽस्मि यन्मत्तो भगवान् स्वयम् । प्रतिगृह्णासि तत्पात्रं मयाप्तं जन्मनःफलम् ॥ कोटिजन्मान्तरे मह्यं न लभ्येत कदाचन । तस्मात्प्रतिगृहाणेदं यथादत्तं सदक्षिणं ॥ ३५ ॥ इत्युपश्लाघ्य गाधेयं मणिकाञ्चननिर्मितम् । भृङ्गारमादाय तदा करे कृत्वाऽमलं जलम् ॥ हिरण्यगर्भगर्भस्थं इति मन्त्रं समुच्चरन् । कोशागारमदादेकं ऋषिहस्ते नृपाग्रणीः ॥ उदके पतिते हस्ते देवस्यत्वेति मन्त्रतः । अग्नये हिरण्यमित्यनुगृह्णन्मुदाऽन्वितः। स्वस्ति वाच्य महीपालं प्रीतो मुनिरभाषत ॥३८॥

इति श्रीमन्महाभारते वनपर्वाणि हरिश्चन्द्रोपाख्याने एकादशोऽध्यायः ॥

---

## द्वादशोऽध्यायः ॥१२॥

विश्वामित्र उवाच-- त्वय्येव वर्तते राजन् दातृत्वं त्वन्यदुर्लभम् ।

त्रैलोक्यविश्रुतं ह्येतदभवन्मत्प्रतिग्रहात् ॥ दुस्तोषे मयि संतुष्टे तपः- क्षुभ्यज्जगत्त्रये। तपश्चाब्रह्मलोकेषु दुर्लभं नहि विद्यते ॥ तस्माच्छृ- णुष्व मे वाक्यं (क्षा) छँत्रं संत्यज भूमिप। अहं हि ते प्रवक्ष्यामि कुरु मे प्रियमुत्तमम् ॥ एते मम सुते राजन् मम सत्येन ते शपे। न यो- निजे मानसे मे नैते चण्डालसूतिजे ॥ भवान् परिणयस्वेमे त्रैलोक्ये नास्ति त्वत्समः। अमरत्वं प्रयच्छामि जरापलितवर्जितम् ॥५॥ एतत्स्वीकारमात्रेण निर्जरोऽपलितोभवेः। नित्यं बली नित्ययुवा कल्पायुश्च भविष्यसि ॥ एतद्धनं पुनर्दास्ये जामाता भव मे नृप। एकस्य बहुभार्यत्व वेदशास्त्रप्रसिद्धकम्। तस्मात्कुरुष्व राजेन्द्र पाणि ग्रहणमुत्तमम् ॥ हरिश्चन्द्र उवाच— बालिशा हीनविद्याश्च वेद- शास्त्रविगर्हिताः। ते वदन्ति दुराचारा असद्वाक्यं पुनःपुनः ॥ तवानेन च किं ब्रह्मन् धर्महीनेन कौशिक। अस्वर्ग्येणायशस्येन नरका र्णवपातिना ॥ अहं कदापि विप्रेन्द्र सर्वावस्थासु सर्वदा। धनप्रा- णापहारेऽपि नानृतं वक्तुमुत्सहे ॥१०॥ मेरुश्चेत्प्रपतेद्वापि रोदस्योः परिर्वर्तनम्। अर्णवानां शोषणं चेन्नानृतं वक्तुमुत्सहे ॥ अनृतं वचनं- चैव यल्लोके सद्भिर्गर्हितम्। वेदशास्त्रविरुद्धं च यद्यन्नरकदुस्सहम् ॥ वर्णाश्रमपरिभ्रष्टं मर्यादाभेदनं च यत् ॥ जातिभ्रंशकरं चैव कुल नाशकरं च यत् ॥ सङ्कीर्णजातिस्त्रीयोनौ रेतः पातनमेव च। अनिबद्धप्रलापश्च परपैशुन्यमेव च ॥ परदोषगुणारोपः परदाराभि- मर्शनम्। एवमादीन्यधर्माणि वदन्त्यनृतमित्यपि ॥१५॥ विश्वस्याहं सदा मित्रं प्रतिज्ञातं मुनीश्वर। औशीनरीमृतेत्वन्यां नोद्वहेयमिति- स्मह ॥ त्यजामि तां न प्रतिज्ञां प्राणायांत्वधुनैव मे। गुण- शीलदयारूपश्रद्धाभक्तिसमन्विता ॥ पतिदैवा पतिप्राणा पतिदेहा पतिप्रिया। कर्मणा मनसा वाचा पतिदेवा दिवानिशम् ॥ धर्मानु- कूलापत्युर्हि छायेवानुगता पतिम्। एकैवालं गृहस्थस्य बह्व्यो विषय हेतवः ॥ विषयासक्तचित्तानां नृपाणां नास्ति सद्गतिः। एक-

भार्यस्य यत्सौख्यं तन्नास्त्यब्जभुवोऽपि ह ॥२०॥ बहुना किं विवादेन न श्रद्दध्या वचस्तव । मया ते दक्षिणा दत्ता मयाऽऽतिथ्यं कृतं तव । स्वपदं गच्छतु भवानहं यामि गृहं मम ॥ विश्वामित्र उवाच— सुवर्णरत्ननिचयैरास्तीर्णा वसुधामिमाम् । अध्यर्धयोजनोच्छ्रायां स्वर्णदो राजसत्तमः ॥ पञ्चाशत्कोटिगोयुक्तां दत्वा विप्राय याचते । सोऽपि नैवं विधा वाचं सगर्वा नावदन्नृप ॥ लुब्धःस्वल्पतरं दत्वा यथा त्वं नृप भाषसे । सुवर्णदातुस्सदृशः स्वर्णदो नान्यभूमिपः ॥ हरिश्चन्द्र उवाच— मन्वानेनैव मा लुब्धमिदमुक्तं त्वयानघ । दर्शयित्वा प्रति निधि मा लुब्ध इति मन्यसे ॥२५॥ सर्वे ददति दातारो भक्त्या शक्त्यनुसारतः । भवतीव च सत्पात्रे दानं शक्त्यनुसारि ह ॥ सप्तद्वीपवती पृथ्वी याचितेऽथ ददाम्यहम् । अन्यस्मै वाथ भवते किं करोति भवांस्तदा ॥ मार्कण्डेय उवाच— इत्युदारां गिर श्रुत्वा हरिश्चन्द्रस्य कौशिकः । उत्प्लुत्योत्प्लुत्य हर्षेण हस्तताल ननर्त ह ॥ प्रतिद्वन्द्विछलेनोक्तं वचो विप्र यथार्थवत् । कृत्वाचला-त्प्रतिग्राह्य नृत्यते भवता वृथा ॥ इत्युक्तवति भूपाले नरीनृत्यमुदैक्षत । गृहीतेऽयं मया भूमि. त्वया दत्ता न संशयः । स्वस्ति तेऽस्तु चिरं जीव स्वस्ति तेऽस्तु सुखी भव ॥३०॥ हास्येनोक्तं मया वाक्यमिति भूपः पुनःपुनः । न दत्ता च मया भूमिर्नदत्तेति नृपोऽवदत् ॥ गृहीतेय मया भूमिर्गृहीतेयमिति द्विजः । स्वप्नान्तरेप्यसौ राजा परिहासकथा-स्वपि ॥ विषयासक्तचित्तोऽपि नानृतं वदति छलात् । इत्थं हि वाग्वसिष्ठस्य सत्या यदि नरेश्वर ॥ अन्यस्मै वाथ भवते इति माम-वदस्स्वयम् । तदा दत्ता त्वयेयं भूर्गृहीतेयं मया ध्रुवम् ॥ तयोः संवदतोरित्थं राज्ञी सा पतिदेवता । भर्तारमनवद्याङ्गी मधुरां गिर-मेरयत् ॥३५॥ चन्द्रवत्युवाच— असत्यं वाथ सत्यं वा परिहास-कथापि वा । प्रतिद्वन्द्विछलं वापि विषयासक्तवागपि ॥ *गुरुणा यद्वचस्तूक्तं तत्तथ्यं कुरु भूमिप । वसुधेयं त्वया दत्ता गृही-

तेय मया ध्रुवम् ।। सत्ये वचसि तिष्ठ त्वं सत्ये सर्वमवाप्यते । सत्येन स्वर्गमाप्नोति सत्येनैवापुनर्भवम् ।। सत्येन राज्यं संपच्च सत्यं सन्ततिवृद्धिकृत् । इयं साम्राज्यसंपच्छ्रीः सत्ये भूयो भविष्यति ।। श्रुत्वा वचः स्वदेव्युक्तं त्रिशंकुतनयो नृपः । इदं दैवहतं चैकं इत्युक्त्वा जोषमास्थितः ।।४०।। विश्वामित्रोऽपि राजानं सगर्वमिदमब्रवीत् । मा राजन् विमना भूयाः सत्यमुक्तं मया ध्रुवम् ।। मही दत्ता त्वया सर्वा गृहीतैव मया च सा। यदि सत्यं पुरस्कृत्य वर्तसे नृपसत्तम ।। द्विर्नब्रूहि वचो भूयस्त्वद्विधो द्विर्नभाषते । सत्यं श्रेष्ठं महायज्ञात्सत्यं हि परमं तपः ।। व्रतानां चैव सर्वेषां सत्यव्रतमनुत्तमम् । सत्यं तु सुकरं वक्तुं सदैकान्तनिवासिनाम् ।। पुत्रदारविहीनानां सदैव वनवासिनाम् । अस्वप्नवनितातुल्यप्रमदासङ्गमध्यगः ।। ।।४५।। दिव्यान्नभुग्दिव्यभोगी प्रजाकार्यधुरंधरः । विषयेन्द्रियसंयोगी परिहासकथास्वपि ।। स्वप्ने विवादकालेऽपि स्त्रीसंभोगेषु यो नृपः । सत्यं न संत्यजेद्यस्तु सएव त्रिपुरान्तकः ।। सत्येन भासते भास्वान् सत्येनैवाग्निरेधते । सत्येन ध्रियते भूमिस्सत्ये सर्वं प्रतिष्ठितम् ।। हरिश्चन्द्र उवाच— दत्तेयं सकलाभूमिः श्रद्धापूर्वं द्विजोत्तम । यास्यामि नगरीं शंभोस्त्वद्भूमौ न वसाम्यहम् ।। परुषं कटुकं क्रूरं दुरुक्तं यन्मया मुने । क्षन्तव्यं तत्त्वया ब्रह्मन् नमस्तेऽस्तु नमो नमः ।।५०।। इति दत्वा महीं भूयो विश्वामित्राय योगिने । निर्जगामात्मनो राज्यान्मन्त्रिस्त्रीपुत्रसंयुतः ।।५१।।

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने द्वादशोऽध्यायः ।।

---

## त्रयोदशोऽध्यायः ।।१३।।

मार्कण्डेय उवाच—एतस्मिन्नेव काले तु मायाचण्डालकन्यके । पातित्वा पादयोस्तस्य दर्शयामासतुर्व्रणम् ।। कन्यके ऊचतुः— सृष्ट्वा चावां ताडयित्वा कृत्वा चैवात्मनो हितम् । पातयित्वा महागर्ते श्रेयः

कि लभते भवान् ॥ विवाहयस्व राजानमावाभ्यां विधिवत्पितः । नभवेवान्यभार्ये च हरिश्चन्द्रमृते भुवि ॥ पश्य पश्य कशाघात- व्रणाद्रक्तं विनिस्सृतम् । दर्शयामासतुःपृष्ठे व्रणरक्तांकिते शुभे ॥ श्रुत्वा तद्वचनं योगी स्वसुतास्नेहयन्त्रितः । आत्मप्रतिज्ञापूर्त्यर्थं राजानं पुनरब्रवीत् ॥५॥ विश्वामित्र उवाच— कथं गच्छसि भूपाल कृत्वा मे विप्रियं महत् । भोभोराजन्नगन्तव्यमेह्येहि पुनरेहि भोः ॥ सुतयोः पश्य मे पृष्ठे व्रणे स्रवति लोहितम् । कथमेतदहं दृष्ट्वा कथं सोढाऽस्मि भूमिप ॥ कुरुष्व पाणिग्रहणमनयोर्मत्प्रियं कुरु । नो चेत्त्वां पातयिष्यामि दुरन्ते शोकसागरे ॥ हरिश्चन्द्र उवाच— नाहं मूढो न बधिरो न मूर्खो बालिशोऽपि वा । किन्निमित्तं भवान् ब्रह्मन् प्रतारयति लीलया ॥ नाहं लोभान्नचक्रोधान्नकामान्नार्थकारणात् । न हेतुवादादन्यस्मात्सत्यं जह्यां कथंचन ॥१०॥ विश्वामित्र उवाच— गृहाण पाणिमनयोः पृथिवी च परंतप । मम प्रियमिदं राजन् शाधि राज्यमकण्टकम् ॥ हरिश्चन्द्र उवाच— पृथिवी सकला दत्ता स- शैलवनकानना । अतःपरं पुनर्ब्रह्मन् किमर्थं बाधते भवान् ॥ ज्ञातोऽस्यद्य भवान् सम्यक् मया पूर्वात्मिका मतिः । न त्वां त्यजति रोषा- त्मन् तपसा ब्राह्मणो ह्यसि ॥ न शान्तियुक्तं ब्राह्मण्यं संप्राप्तं तपसा त्वया । वसिष्ठस्पर्धया पूर्वं तत्ते शान्तिर्नविद्यते ॥ विश्वामित्र उवाच— धिक्त्वां धिक्त्वां दुराचारं मम पूर्वात्मिकां मतिम् । निन्दसे मूर्ख मूर्खाग्र्य नत्वं जीवन् विमोक्षसे ॥१५॥ या दत्ता प्रथमं राजन् बहुस्वर्णस्य दक्षिणा । तां प्रयच्छ महाराज दत्वा गच्छ यथासुखम् ॥ हरिश्चन्द्र उवाच— मुकुटं रत्नखचितमङ्गदं च तथा- विधम् । सुवर्णमणिमालाश्च करकण्ठविभूषणम् ॥ हृदयोदरबन्धं च कटिसूत्रविभूषणम् । अङ्गुलीयानि हारांश्च केयूरादीनि सर्वशः ॥ अन्यानि राजयोग्यानि वस्त्राण्याभरणानि च । सुतस्यैतानि जायायाः भूषणाच्छादनानि च ॥ अतिवायुमनोवेगान् जात्यश्वान् मन्दुरागतान् ।

ऐरावताभान् शोभन्तः कुलजान् पर्वतोपमान् ॥२०॥ सृणिग्रैवेय वर्मादिविलसन्तो महागजान्। रथं च स्वर्णविकृतं मेरुमन्दरसन्निभम्॥ व्याघ्रचर्मपरीधानं दिव्यवाजिसमावृतम्। मुक्तामाणिक्य मालाढ्यं किङ्किणीजालमण्डितम्॥ हेमघण्टाघणात्कारं क्षुद्रघण्टानिनादितम्। वृषध्वजपताकाभिः स्वर्णदण्डविराजितम्॥ सहस्रसूर्यचन्द्राभं शङ्खचक्राक्षसंयुतम्। एतादृशं रथं चैव गोमहिष्याविकादिकान्॥ यत्किंचिद्द्रव्यसङ्घातं पत्तनग्रामसंस्थितम्। खेटखर्वटसंस्थं च ग्रामस्थं दुर्गसंस्थितम् ॥२५॥ सर्वं जनपदोद्भूतं विप्रग्रामधनादृते। ऋते च दैववित्ताद्यदन्यत्सर्वं निवेदितम्॥ मार्कण्डेय उवाच— श्रुत्वैतद्वचनं राज्ञो विश्वामित्रो महामुनिः। आहूय संहसित्वैव गर्वोत्सिक्तो वचोऽब्रवीत्॥ कौशिक उवाच— भो भो राजन् प्रीतमनास्त्वन्नो बुद्धिमतां वरः। मह्यं ददासि मद्द्रव्यमत्यन्तं चतुरो भवान्॥ वसुधायां मदीयायामखिलायां महीपते। सत्यां तदुद्भवं सर्वं राजयोग्यं च यद्वसु॥ राजलक्षणयोग्यानि छत्रयानासनानि च। एतच्चान्यच्च यत्किंचित् तत्सर्वं विद्धि मामकम् ॥३०॥ मदीया पृथिवी सर्वा सशैलवनकानना। तदुद्भवं च तत्सर्वं मदीयं विद्धि पार्थिव॥ पृथिव्यां सागरान्तायां भूषणादिधनं च यत्। मामकं विद्धि राजेन्द्र यच्चान्यत्तत्प्रदीयताम्॥ येन केनाप्युपायेन दत्वा मे दक्षिणां पृथक्। दुरन्तादृणदुःखात्त्वं मोचयात्मानमात्मना॥ इहलोके परत्रैव यथा प्रीतो भविष्यसि। नृणां नृपतिशार्दूल लोकद्वयसुखावहम्॥ शावी च सूतकी चैव दशरात्रेण शुद्ध्यति। अग्नित्यागी ऋणी चैवमात्महा च सदा ऋणी ॥३५॥ तस्मादस्मादृणाद्घोरान्मोचयित्वा सुखी भव। अन्यथा पाणिग्रहणं कुरु त्वं सुतयोर्मम। उर्वी दक्षिणया साकं सत्येनात्मानमालभे॥ हरिश्चन्द्र उवाच— सत्यं सत्यं द्विजश्रेष्ठ ददाम्यन्यद्धनं द्विज। मया तद्विस्मृतं सर्वं ज्ञातमद्य सुनिश्चितम्॥ ददामि नात्रसन्देहस्सत्यमुक्तं मया

द्विज। नित्यमेवं गुरुतया वर्तेथाः मुनिसत्तम ॥ निषेकादिश्मशानान्तचत्वारिंशत्सुसंस्कृतः। लोकमान्यो गुरुर्विद्वान् तपसा ब्रह्मणा समः ॥ एवं गुणस्वभावस्त्वं धर्मतो मे पिता ह्यसि। अहं च भवतः पुत्रः इमे चापि सुते तव ॥४०॥ एकोदरप्रसूतानां मिथोऽस्माकं कथं भवेत्। विवाहः पुत्रपुत्र्योश्च कथं मां हन्तुमिच्छसि ॥ एते मया विवाह्ये चेत्तवपुत्र्यौ तथैव च। तस्मादेतन्नवक्तव्यमेकोदरविवाहकम् ॥ तुभ्यं धनं प्रदास्यामि मया पूर्वं प्रतिश्रुतम्। देहि मह्यं मासमेकं येन दास्यामि ते वसु ॥ ऋणी मर्त्यः परिक्षीणः शनैर्वाच्यो न निर्दयम्। शिष्यमेकं संप्रयच्छ यस्मिन् दद्यां धनं शनैः ॥ यथोदितं यथा दद्यां दयादाक्षिण्यशालिने। एतावतीं कृपां मह्यं कुरु कारुण्यसागर ॥४५॥ मार्कण्डेय उवाच— एवमुक्त्वा तदा राजा निश्चक्राम तदाश्रमात्। स्त्रीपुत्रमन्त्रिसहितस्तेवनेनें वनं ययौ ॥ अथ नक्षत्रकं नाम शिष्यं परमनिष्ठुरम्। प्रेषयामास भूपाय संदिश्य च हिताहितम् ॥ पृथिव्यां सागरान्तायां न स्थातव्यं कदाचन। त्रिशंकुजेन मद्वाक्यं शाधि यस्त्वं दिवानिशम् ॥ द्वीपेषु मुक्तिक्षेत्रेषु वस्तव्यं च यथासुखम्। सामान्यभोजनं दाराः संभोगाच्छादनानि च ॥ सामान्यमेतत्सर्वेषां राज्यभारो ममैव हि। वानप्रस्थयतीनां च योगिनां क्षेत्रवासिनाम् ॥५०॥ देवारामतटाकानां राजा नाहं तु शिक्षिता। केवलं पालकस्तेषां तावत्स्वर्गो न शिक्षते ॥ अङ्गं सप्तविधं चैव चतुरङ्गबलं तथा। ऐश्वर्यं च धनं कोशो भूमिराज्ञा ममैव हि ॥ ममाज्ञां च पुरस्कृत्य सदाचारोऽनुवर्त्यताम्। गच्छ शीघ्रं महाराज दक्षिणा मे प्रदीयताम् ॥ शृणु नक्षत्र मद्वाक्यं सावधानमना भवान्। प्रातर्मध्यंदिने सायं दीयतां दक्षिणा गुरोः। इति सन्दिश मा भैषीः राजानं मम शासनात् ॥५४॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने त्रयोदशोऽध्यायः

---

## चतुर्दशोऽध्यायः ॥१४॥

हरिश्चन्द्र उवाच— अवश्यं चाप्रमत्तेन गुरोराज्ञानुवर्तिना। शिष्टाचारेषु यो धर्मो धर्मशास्त्रे च पठ्यते ॥ स एव सम्यक्कर्तव्यो विविधं धर्मलक्षणम्। सत्यमेव पुरस्कृत्य सर्वधर्मेष्वनुत्तमम् ॥ यथा न्यायं यथोपेतं दास्येऽहं यज्ञदक्षिणाम्। यथा ते दक्षिणां दत्वा मुक्तोऽहं ऋणबन्धनात् ॥ अनृणो भवामि योगीन्द्र तथामाऽनुगृहाण भोः। इत्युक्त्वा दण्डवद्भूमौ प्रणिपातपुरस्सरम् ॥ वर्म चोक्त्वा-भिवाद्यैव सोऽतिष्ठत्संयताञ्जलिः। ऋषेरभिमुखःपश्यन् भक्त्या तन्मुखपङ्कजम् ॥५॥ सोऽपि कोपाच्चिरं तूष्णी नाशीर्वचनमुक्तवान्। आचारपद्धतिभयात् धर्मस्य विजयीभव ॥ इत्येवमुक्तो मुनिना सहसा प्रतिगृह्य तत्। राजा कृतार्थमात्मानं मन्यमानस्तदाश्रमात्। मुनिं प्रदक्षिणीकृत्य सोऽपयातुं प्रचक्रमे ॥ मार्कण्डेय उवाच— पत्नी च पुत्रमाश्वास्य मन्त्रिणं च विशेषतः। तिष्ठ मन्त्रिन्ममैवाज्ञां पुरस्कृत्य गृहे वस ॥ विश्वामित्रं समाश्रित्य तद्धितेऽप्सुर्दिवानिशम्। नातिदूरसमीपस्थो दिवारात्रमतन्द्रितः ॥ अनुशास्येति तं राजा वनं गन्तुं प्रचक्रमे। स पत्न्या च सुतेनैव धैर्यवीर्यसमन्वितः ॥१०॥ एवं मन्त्रिणमाश्वास्य यावद्गन्तुं प्रचक्रमे। मूर्च्छाविह्वलितस्तावन्मन्त्री भूमौ पपातह ॥ मूर्च्छया पतितं दृष्ट्वा राजा मूर्च्छामवाप ह। तौ दृष्ट्वा महिषीपुत्रौ पेततुर्भुवि मूर्च्छितौ ॥ सुचिरात्तैस्समाश्वस्तो राजा मन्त्रिणमब्रवीत्। समाश्वसि हि भो मन्त्रिन् कालस्य कुटिला गतिः॥ वियोजयति यः कालः कालो योजयति प्रजाः। तस्मात्कालानुगाः सर्वे कालात्मकमिदं जगत् ॥ महान्तं वाऽमहान्तं वा भारं योजयते नरम्। यदा यत्र नरः सोऽपि कालस्तं वोढुमर्हति ॥१५॥ जीवकर्मा-न्वितः कालो जीवं जनयति प्रभुः। पुनर्मारयति क्षिप्रं कर्मलोपं च मा खिदः ॥ कंचित्कालं सुखयति तं दुःखापयति कञ्चित्।

ब्रह्मादिमशकान्ताश्च सर्वे कालस्य किङ्कराः॥ कालमेवाऽनुवर्तन्ते ब्रह्माद्या अमृतान्धसः। तस्मात्कालकृतं ज्ञात्वा मा तप्यस्व महामते॥ यदा यत्र कृतं येन यावत्कर्म शुभाशुभम्। तदा तत्रैव तेनैव भुज्यते तावदेव हि॥ अन्यस्यं कर्तुर्नान्यस्य कर्तुरेव फलं यतः। अन्यस्य कर्मणां भोक्ता नान्यश्च भुवि विद्यते॥२०॥ अहं च स्वकृतं भोक्ष्ये भुङ्क्ष्व त्व यत्कृतं शुभम्। एवमुक्तस्सत्यकीर्तिः हरिश्चन्द्रेण कौरव॥ दुःखशोकपरीतात्मा राजानं ह्येनमब्रवीत्। त्यक्त्वा मां गच्छसि यदि प्राणांस्त्यक्ष्याम्यसंशयम्॥ सुखं वा यदि वा दुःखं त्वया भोक्ष्ये त्वहं नृप। न मां त्यजेः प्राणसमं दासस्ते न भवाम्यहम्॥ इह वा परलोके वा भवत्संगो भवेन्मम। यदा त्यजेद्भवान् प्राणान् त्वद्देहे चिरसंभृतान्। तदा मां त्यज राजेन्द्र तावज्जीवाम्यहं यदि॥ मार्कण्डेय उवाच— एवमुक्तो महाराजो निश्चक्राम त्रिशंकुजः। मनसा दूयमानेन पत्नीमन्त्रिसुतान्वितः॥२५॥ एकवासस्सुसंवीतः क्षुत्पिपासार्दितः शुचिः। आतपात्तप्तसर्वाङ्गस्ताम्यत्खिद्यन्मुखाम्बुजः॥ केवल पादचारेण प्रस्खलन्वै पदे पदे। सूक्ष्मपाषाणनिचये नानाकण्टकितान्तरे॥ कण्टकाकृतिपाषाणनिरन्तरमहीतले। सिंहव्याघ्रवराहादिवृकश्वापदभीकरे॥ वृश्चिकादिविषप्राणिदुष्टदुर्जनसाध्वसे। दिवाभीतशिवाकाककङ्कगृध्ररवाकुले॥ वराहशल्यगोधाऽऽखुझिल्लिकागणनादिते। शुष्यच्छिकण्टकीवृक्षखण्डमण्डलमण्डिते॥३०॥ वात्यावेगोत्थदावाग्निज्वालालीढककुन्मुखे। निम्नोन्नतमहीभागे क्षुद्रपर्वतदुर्गमे॥ निर्वारितप्रवाल्लूकवक्रकाननिम्नगे। प्रशस्तवृक्षरहिते निःच्छाये निर्जने वने। इत्थ सस्त्रीमन्त्रिसुतः प्रययौ काननाध्वनि॥३२॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने चतुर्दशोऽध्यायः॥

## पञ्चदशोऽध्यायः॥१५॥

मार्कण्डेय उवाच— एतास्मिन्नेव काले तु प्रयातस्य प्रजे-

शितुः। पक्षिणश्च मृगाश्चैव दक्षिणेऽशुभसूचकाः॥ गच्छन्तं गहने घोरे दृष्ट्वा तं धैर्यवारिधिम्। दुःखशोकाकुला मन्त्री विललापाति दुःखितः॥ अहोऽतिचञ्चला लक्ष्मीः क्षणं तिष्ठति न क्वचिन्। गजकर्णानुसारेण पुनरायाति याति च॥ अव्यवस्थितचित्तेव महास्नेहविवर्धिता। सति वाऽसति वा पुंसि न चिरं तिष्ठति क्वचित्॥ सप्तद्वीपार्णवां पृथ्वीं यश्शशासैकराट् पुरा। यस्याश्रयवशादेव स्वराट् स्वपिति निर्भयः॥५॥ स्वर्गे यं च प्रशंसन्तो दिवारात्रमतन्द्रिताः। विनिद्रा भोजना आसन्नस्त्रभा अमृतान्धसः॥ यत्कार्मुकविसृष्टानां शराणां नर्तपर्वणाम्। देवासुरनृपेन्द्रेषु कश्चिच्छक्तोऽस्ति तेजसा॥ अश्वानां हेषितरवैः वारणानां च बृंहितैः। स्त्रीणां कटककाञ्च्यादिभूषणानां च शिञ्जितैः॥ सूतमागधबन्दीनां स्तुतिसंघातचाटुभिः। निरस्यते पौरघोषो यस्य वेश्मनि नित्यशः॥ यो यदा मृगयासक्तो विनिर्गच्छति पट्टणात्। पृथिवीमन्तरिक्षं च द्यां चैव रजसाऽऽवृणोत्॥१०॥ रथाश्वगजपादातसमुत्थेन विसारिणा। विहारनिर्गमे यस्य सहस्राणां शतं शतम्॥ अश्वाश्च वारणा लक्षाः रथानां च शतं शतम्। कोटिसंख्यापदातीनां विनिर्गच्छति संघशः॥ सहस्रसंख्या राजानो यं यान्तमनुयान्ति हि। मध्ये यस्य सहस्राणां छत्राणां सत्रयाजिनाम्॥ राजसूयोद्भवं छत्रं रविमण्डलसन्निभम्। सहस्रधुर्यं हेमाङ्गं नानारत्नपरिष्कृतम्॥ सहस्रादित्यसंकाशं हरिदश्वरथोपमम्। रथमारुह्य यो याति विहारतरुवाटिकाम्॥१५॥ सोऽयं राजा महाटव्यां पादचारेण गच्छति। यं नित्यं सेवते वायुर्जलमण्डलमध्यगम्॥ दिव्याङ्गरागलिप्ताङ्गं दिव्यस्त्रीपरिवेष्टितम्। सोऽयमद्यातपक्लान्तः स्वेदार्तः पांसुवेष्टितः॥ वेणुवीणाकाहलीनां भेरीणा शङ्खनिस्वनम्। पणवानकशृङ्गाणां गोमुखानां च निस्वनम्॥ सप्तस्वराणां गानं च किन्नरीणां च निस्वनम्। स्तोत्रं स्तुतिं च गीतं च चाटुवाक्यं प्रियंवचः॥ कोकिलालापसल्लापं ललनागीतनिस्वनम्। तर्कवादं शास्त्र-

पाठं वेदघोषं च नित्यशः ॥२०॥ यः शृणोति दिवारात्रं श्रवणानन्दपूरितः। स शृणोत्यद्य विपिने सिंहव्याघ्रवृकस्वनम् ॥ अशिवोलूककाकोलगृध्रकौशिकनिस्वनम् । ऋक्षवानरभल्लूकगोलांगूलकुलारवम् ॥ मुक्तामाणिक्यवैडूर्यपद्मरागादिराजिते । विद्रुमस्वर्णविकृते प्रासादे शतभौमिके ॥ सर्वर्तुकुसुमोद्देशे सर्वकालसुशीतले । सर्वसौरभ्यपवने सुगन्धिद्रव्यलेपिते ॥ रत्नस्तंभे रत्नकुड्ये चन्द्रकान्तशिलातले । दिव्यास्तरणसंवीते हेमरत्नविभूषिते ॥२५॥ परितः पतितस्वच्छजलधारासुशीतले । पर्यङ्के रत्नरचिते पुष्पास्तरणसंवृते ॥ दिव्यप्रालेयसंसिक्तकदलीदलवीजनः। वीज्यमानःस नारीभिः तालवृन्तैश्च वीजितः ॥ पीनहस्तोन्नतकुचश्यामाहस्तविसारितैः। दोधूयमानो यश्शेते ज्योत्स्नाशुभ्रैः प्रकीर्णकैः ॥ सोऽयमद्य महीपृष्ठे स्वयं तृणसमन्विते । सूक्ष्मपाषाणनिचये दुःस्पर्शे कण्टकान्विते ॥ वनवात्यासमालूनपतितैर्जीर्णपल्लवैः । कीर्यमाणः पांसुभिश्च कर्णनासाक्षिपूरितः ॥३०॥ शिवाकृतरवं शृण्वन् शयिष्यति कथं त्वहो । यस्य प्रीतिं सुखं भोगं भाग्यं कीर्तिं यशो धृतिम् ॥ राज्यसंपदमैश्वर्यं धर्मं सत्यं च मार्दवम् । दयां धैर्यं च गाम्भीर्यं शौर्यं दाक्ष्यं वदान्यताम् ॥ सौजन्यं भावशुद्धिं च प्रजारञ्जनकौशलम् । विद्यां बुद्धिं सदाचारं राजनीतिं च सद्गुणम् ॥ श्रियं रूपं च लावण्यमङ्गप्रत्यङ्गसौष्ठवम् । वर्णाश्रमस्थापनं च वाग्मितां सत्यसन्धताम् ॥ इत्येवमादिकानन्यान्नवर्णयितुमादितः । शक्नोत्यपि स्वरूपं च शेषोऽपि किमुतापरे ॥३५॥ सोऽयं त्रिशंकुजो राजा कुत्र गच्छति तिष्ठति। यथा ह्यष्टाङ्गयोगैश्च जपहोमसुरार्चनैः॥ कोटिहोमैश्च दानैश्च व्रततीर्थनिषेवणैः । कोशाश्वरथमातङ्गैस्सत्वेन च बलेन च ॥ बुद्ध्या पौरुषसामर्थ्यैः ब्रह्मणा च हरेण च। विष्णुनापि सुरैस्सेन्द्रैस्सवित्रा शशिनापि वा॥ व्यासाद्यैः ऋषिभिश्चैव बुद्ध्या च दृढया तथा। न शक्यते दैवबलं चान्यथा कर्तुमंजसा ॥ गत्वा च मृगयां हत्वा मृगान्

दुष्टानशेषतः। पालयामि प्रजाः सर्वा इति निश्चित्य भूमिपः ॥४०॥ इत्थं परोपकाराय प्रवृत्तस्य महीपतेः। अनिच्छयैव संप्राप विपदस्य विधेर्बलात् ॥ सीतया चाप्यरुंधत्या दमयन्त्या सुकन्यया। नालायन्या च पारन्त्या लोपामुद्रा च कृष्णया ॥ सावित्र्या च सरस्वत्या शीलवत्याऽनसूयया। ख्यात्या च माद्या कुन्त्या च छायया च नृप त्वया ॥पतिव्रताभिरन्याभिः पुण्यस्त्रीभिर्दिवानिशम् । श्लाघ्यमाना वरारोहा भृत्यमृष्टान्नदायिनी॥ पातिव्रत्येन शीलेन सत्येन च नयेन च। पतिदैवतका चापि पतिप्रीतिकरैर्गुणैः ॥४५॥ समां नाप्यधिकाप्येवं कोमलाङ्गी कुलाङ्गना। मृदुपादतला तन्वी कथं व्रजति कानने ॥ पादछायाश्रिताभर्तुःच्छायेवानुगता पतिम्। मर्वलक्षणसंपन्नां सौम्यां सोमसमाननां॥ उशीनरसुतां पश्यन् कथं गच्छेत भूमिपः। सप्तरक्तं त्रिगम्भीरं त्रिविस्तीर्ण षडुन्नतम्॥ सिहास्यमायतभुजं सम्राट् लक्षणलक्षितम्। धूलिधूसरसर्वाङ्गं क्षुत्पिपासाकुलान्तरम्॥ कथमेषसुतं पश्यन् तेवनेन वनं गतम् । आत्मना सदृशं पुत्रं बिम्बाद्बिम्बमिवोद्धृतम् ॥५०॥ गुणरूपप्रमाणैश्च स्वयमेवायमित्यपि । पादचारेण गच्छन्तं विषमे विपिनाध्वनि ॥ पश्यतो भूपतेः पादौ कथं गन्तुं च शक्नुतः। मन्त्री स विललापैवं भूयो राजानमन्वगात्॥ वनाद्वनान्तरं गच्छन्नाससाद महद्वनम्। गच्छतां च नदी नद्यास्तथैव च गिरेर्गिरिम्॥ देशाद्देशं भूमिपानामाश्रमादाश्रमान्तरम्। तेषां दिनान्यतीतानि मासेऽस्मिन् सप्तविंशतिः। अपरस्मिन् दिने प्रातः पत्नीमालोक्य दुःखितः। न दक्षिणामुनेर्दत्ता इति तामब्रवीन्नृप ॥५५॥ इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने पञ्चदशोऽध्यायः॥

## षोडशोऽध्यायः ॥१६॥

हरिश्चन्द्र उवाच— किं विषण्णाऽसि नीतिज्ञे विषादेन च किं भवेत्। काननेऽस्मिन् महाघोरे निर्जने घोरसंकटे ॥ कुत्र नो बान्धवास्सन्ति क्व यास्यामो वरानने। कुत्र गत्वा सुखं यामो

दक्षिणा कुत्र लभ्यते ॥ विश्वामित्रस्य किं कुर्मः का नो गतिरनुत्तमा । अंतो न विद्यते देवि कदाऽपि मम संपदः ॥ अधुना क्व गता सा मे कुतस्ते मित्रबान्धवाः । चिरं मयाऽनुभुक्ताऽपि स्वप्नलब्धोपमाऽभवत् ॥ संपच्चिरानुभूतेश्च लब्धं दुःखं महत्तरम् । अस्माकं कश्शरण्योऽद्य मा भीरिति च को वदेत् ॥५॥ राज्यं कुतो मे कोशश्च चतुरङ्गबलं कुतः । किं करोमि वरारोहे पश्य दैवबलं मम ॥ सत्यकीर्तिरुवाच— इतोप्यतिमहद्दुःखं पुनर्यास्यसि भूमिप । तत्परं च महासौख्यं प्राप्स्यसि त्वं नृपोत्तम ॥ एतन्मया स्वप्नदृष्टं सत्यस्स्वप्नो भविष्यति । स्वप्ने भवान्मया दृष्टस्तैलह्रदनिमज्जितः ॥ त्रिर्निमज्य त्रिरुत्थाय पुनर्गोमयकर्दमे । निमज्य तत उत्थाय भार्या तैलमपाययत् ॥ ततः कैलासशिखरे भवन्तं दृष्टवाँस्थितम् । तस्मादापन्महाघोरा ते भविष्यत्यसंशयम् ॥१०॥ तदापदमिमां प्राप्य न प्राप्तुं मोहमर्हसि । भवद्विधा महात्मानो न शोचन्ति महापदि । ददाति सत्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ चन्द्रवत्युवाच— देशो विशालो राजेन्द्र मुनयो बान्धवास्सुराः । देशे देशे च वसतिःग्रामे ग्रामे च नो गृहम् ॥ पानीयं शीतलं लभ्यं सरस्सु च नदीषु च । भक्तार्तिभञ्जनपरो भर्गो नो वसुदो नृप ॥ भक्तानां नो महेशश्च स्वदेशो भुवनत्रयम् । के केषां चैव मित्राणि के केषां चैव बान्धवाः ॥ के केषां सुहृदश्च स्युः के केषां गतिरच्युता । केषां तु कैश्च संयोगो वियोगोऽपि नरेश्वर ॥१५॥ स्वकर्मभिश्च संयोगो वियोगश्च स्वकर्मभिः । सर्वे क्षयान्ताः निचयाः पतनान्ताः समुच्छ्रयाः ॥ संयोगा विप्रयोगान्ताः मरणान्तं च जीवितम् । जातस्य वै ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च ॥ तस्मादपरिहार्येर्थे न त्वं शोचितुमर्हसि । अनादिनिधनो ह्येष संसारस्सर्वदेहिनाम् ॥ संसारदावतप्तानामितश्चेतश्च धावताम् । नास्ति छायाश्रयो भूप विश्वेशाश्रयणादृते ॥ नात्यन्तदुःखिनस्सन्ति न चैव सुखिनस्तथा । सुखदुःखे समे नृणां स्वस्वकर्मसमार्जिते ॥२०॥

स्वकर्म पितृवल्लोके स्वकर्म जननी यतः। स्वकर्म भ्रातृपुत्राश्च स्वकर्म स्वर्गमोक्षकाॅन् ॥ एवं विदित्वा विद्वांसः दत्तदेहानहंकृताः। पुत्रमित्रकळत्रादिममतासङ्गवर्जिताः॥ निरीहा निष्परिस्पन्दास्त्यक्तसर्वपरिग्रहाः। निरीषणा जगन्मित्राः स्वस्तिकाद्यासनस्थिताः॥ इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहृत्य मनो हृदि। निर्बीजध्यानमासाद्य नासाग्रन्यस्तलोचनाः॥ ध्यायन्त्यहर्निशं ब्रह्म गिरिकन्दरसानुषु। तस्माद्ध्येयो महादेवः शशिभास्करलोचनः॥२५॥ करोत्यनुग्रहं सद्यः सर्वदा भक्तवत्सलः। एवं विवदतोर्भूप तयोर्वासरमध्यगः॥ बभूव वासरपतिः चरन्नाकाशमण्डले। एतस्मिन्नन्तरे ते च चित्रभानुस्तापिताः॥ वृक्षमूलमुपाश्रित्य तत्र ते समुपाविशन्। तदाऽऽजगाम योगीन्द्रो विश्वामित्रोऽतिकोपितः॥ प्रतिश्रुतधनाभावान्मामातिक्रमणेन च। राजाऽश्रौषीन्महाशब्दं सेनावाद्यसमीरितम्॥ भेरीमृदङ्गनिःसाणढक्कापटहसुध्वनिम्। मद्दलं पणवं चैव तांपट्टं दौन्दुभं दिवि॥३०॥ वेणुवीणाशङ्खरवं शृङ्गगोमुखतालजम्। सूतमागधवैतालिस्तुतिगीतरवादिकम्॥ हेषारवं तुरङ्गाणां गजानां बृहणं तथा। झङ्कारवं रथौघाणां सेनाकलकलध्वनिम्॥ चाटुवाद्यं प्रियरवं मल्लवारणबन्दिनाम्। श्रुत्वैव विस्मितो राजा किमेतदिति चिन्तयन्॥ ऊर्ध्वाननो विवृत्ताक्षः सधैर्यमवतिष्ठति। रथेभहयपादातैर्निबिडं भीकरं महत्॥ परिवार्य हरिश्चन्द्रं नृपमक्षौहिणीबलं। हस्त्यश्वरथपादातसंबाधं सागरोपमम्॥३५॥ विष्वगायत माश्चर्यं संक्षुभ्यत्सागरोपमम्। स दृष्ट्वा विस्मितमनाः आकाशादिदमागतम्॥ किमेतत्किमियं माया किं चित्तभ्रमणं मम। इति चिन्तयतस्तस्य विचित्रं समदृश्यत॥ दिव्यप्रसूनवर्षं च देवगन्धर्ववर्षितम्। तत्पुष्पवर्षमध्यस्थमपश्यत्कंश्च योगिनम्॥ विद्युत्पिङ्गजटाजूटं त्रिपुण्ड्रोद्भासिताननम्। दक्षिणांसलसद्दण्डं साक्षमालकमण्डलुम्॥ भसितोद्भासिसर्वाङ्गं शुभ्रयज्ञोपवीतिनम्। कृष्णाजिनोत्तरा-

सङ्गमुदितादित्यसन्निभम्॥४०॥ पुण्डरीकदलाभासं सन्ध्यातपनिभांशुकम्। पृष्ठसंबद्धतूणीरशरकार्मुकभीकरम्॥ एकतो ब्राह्मणाङ्कोऽयं एकतः क्षत्रलांछनः। अपूर्वमिदमाश्चर्यं कोऽयं मे दर्शनातिथिः॥ इति विस्मयमानं तं विस्मयानिमिषेक्षणम्। अंबरे कालमेघस्थ इदं वचनमब्रवीत्॥ दीयतां दक्षिणा राजन् या त्वयोक्ता पुरा मम। बहुसौवर्णके यागे तत्र किं समुपार्जितम्॥ शक्तिस्ते नास्तिचेद्राजन् कुरुष्व वचनं मम। राज्येन सह वित्तेन गृहाण मम कन्यके॥४८॥ उभयोस्त्वमशक्तश्चेत्पतिष्यस्यघवारिधौ। महता नृप दोषेन यावदिन्द्राश्चतुर्दश॥ हरिश्चन्द्र उवाच—अहं स्वप्नेऽपि विप्रेन्द्र नानृतं वक्तुमुत्सहे। जन्मान्तरशतेनापि किंपुनस्त्वत्रजन्मनि॥ कुर्वन्तु तव पुत्रास्ते चण्डाल्योः पाणिसंग्रहं। ते च पुत्र्यौ तवाहं च न स्मरामि वदामि च॥ मार्कण्डेय उवाच— एवमुक्तो नृपेन्द्रेण भूयस्सकुशिकात्मजः। क्रोधरक्तान्तनयन इदं वचनमब्रवीत्॥ त्रीण्येवाहानि शिष्टानि मासस्यास्य वृथामते। ऊर्ध्वं दिनत्रयान्नाहं गृह्णामि क्रतुदक्षिणां॥५०॥ हरिश्चन्द्र उवाच— इतस्तृतीयदिवसे पूर्णां दास्यामि दक्षिणां। भानोरस्तमयात्पूर्वं सत्येनाहं शपामि ते॥ ददामि हस्ते शिष्यस्य तव नक्षत्रकस्य च। सत्यमेवपुरस्कृत्य मुने भवदनुग्रहात्॥ यथोदितं प्रदास्यामि सुवर्णमणिविद्रुमम्। शतं सहस्रं लक्षं वा गृह्णातु तव शिष्यकः॥ मार्कण्डेय उवाच— इत्युक्तस्समुनिस्तेन स्फुरमाणोष्ठसंपुटः। पुनरूचे महीशेशं नाहं त्रिंशद्दिनात्परं॥ सवितर्युदिते किंचित् प्रतिगृह्णामि दक्षिणां। ततः परं भवान् लोके मृषावादी भविष्यति ५५॥ इत्थमावेद्य राजानं पुनः शिष्यमुवाच ह। श्रुणु नक्षत्र राजानं याचस्व मम दक्षिणां। दिनत्रयमहोरात्रं निस्त्रपस्त्वं दिने दिने॥ मार्कण्डेय उवाच— एवमुक्त्वा ततः शीघ्रं पश्यतः कौशिकस्ततः। तिरोदधे नृपस्यास्य ससैन्योऽद्भुतविक्रमः॥५७॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने षोडशोऽध्यायः॥

## सप्तदशोऽध्यायः॥१७॥

मार्कण्डेय उवाच— ततोऽपराण्हे संप्राप्ते मन्दत्विषि दिवाकरे। अनुगम्यमानः पुत्रेण जायया मन्त्रिणा पुरीम्॥ वाराणसी नृपश्रेष्ठ मोक्षनिश्रेणिकां ययौ। अथ प्रयान्तमालोक्य हृदये धर्मनन्दन॥ विघ्नं चकार भगवानाग्नेयी धारणां स्मरन्। मूलाधारगतं वह्निं वायुभ्यां समुदीर्य च॥ ध्यात्वा विराजमात्मानमाश्रयाशनमञ्जसा। स्वयं वैश्वानरो भूत्वा ध्यानेनात्मानमात्मनि॥ प्रादुरासीत्ततःशीघ्रं भगवान् हव्यवाहनः। परिवेष्ट्य च राजानं समन्ताद्योजनत्रयम्॥५॥ ज्वालाजिह्वो लेलिहानस्तरुगुल्मलतावलि। दहन्मृगान्पक्षिणश्च धूम्रज्वालास्फुलिङ्गकैः॥ खेचराः प्रपतन्त्यग्नौ धूमज्वालोष्मताडिताः। सिंहव्याघ्रवराहाश्च सारङ्गाश्च तरक्षवः॥ वृकवश्चकभल्लूकाः राजानं पर्युपस्थिताः। राजा पत्नी सुतो मन्त्री धूमरुद्धेक्षणा भृशम्॥ मार्कण्डेय उवाच— दह्यमाने वने तस्मिन्सालतालादिभूरुहे। स दृष्ट्वा पृथिवीपालो महादावं समुत्थितं॥ आहूयोशीनरसुतामिदं वचनमब्रवीत्। पश्यसि त्वं वरारोहे महादावं समुत्थितं॥१०॥ अस्माकं का गतिर्लोके क्व यास्यामः कुतो वयं। कुत्र स्थितानि मित्राणि कुतो मे स्नेहबान्धवाः॥ कुतो मे राज्यसंपत्तिः कुतो मे द्रव्यसंचयः। ऋणिनो मे गतिः का नु लोकयोरुभयोरपि॥ जन्मान्तरशतोपात्तं पश्य मे पापसंचयं। बुद्धि कथय मे देवि गतिं दुःखविमोचनी॥ युगधर्मविदो विप्रा युगधर्मं वदन्ति हि। सम्यक् प्रवृत्तस्य मम कार्यविघ्ना भवन्ति हि॥ साध्वी योषा सदा देवि भोजनाच्छादनादिभिः। भ्रियते हि यदा भर्त्रा सा भार्येत्युच्यते बुधैः॥१५॥ भार्यायां दह्यमानायमशक्तो रक्षितुं प्रिये। कथं भर्ता भवेयं ते लोको मां किन्नु वक्ष्यति॥ दह्यमानां कथं पश्ये प्राणेभ्योऽपि गरीयसीं। पुत्रं च मे कथं पश्ये दह्यमानमनाथवत्॥ आत्मानं नानुशोचामि न पत्नी तनयं न च। अनुरक्तं च दक्षं च सत्यकीर्तिं महामतिं॥ अनुशोचामि भद्रं ते मम प्राणसमं

गतम् । ज्वालावितानितनभाः धूमव्याप्तदिगन्तरः ॥ कालयानो वन मवं सर्वसत्वक्षयंकरः । कृष्णवर्त्मा समायाति समीपं मे झटित्यहो । ऋणिनो मे गतिः का नु ऋणं पापफलं महत् ॥२०॥ चन्द्रवत्युवाच— न कश्चित्कस्यचिन्मन्त्री न कश्चित्कस्यचित्सुहृत् । न कश्चित्कस्य चिद्बन्धुर्नकश्चित्कस्यचित्सखा ॥ विदेशः कः परोदेशः स्वदेशः कस्य को नृप । कर्म मित्रं कर्म सुहृत्कर्म संबन्धिबान्धवाः ॥ कर्मदाया दवान्लोको स्वकर्म सुखदुःखवान् । करोति सर्वमीशानः प्राणिकर्म फलोदयः ॥ ईश्वरस्सर्वभूतानां हृद्देशेषु व्यवस्थितः । भ्रामयन्नेष भूतानि यन्त्रारूढानि मायया ॥ मा विषादं महाराज कुरु वीर कदाचन ॥ सामान्यमरणाः सर्वे ब्रह्मादिमशकान्तकाः । विद्वानेवं महाप्राज्ञो न शोचति महामतिः ॥२५॥ मार्कण्डेय उवाच— अथ धूमेन महता ज्वालया च तदा नृप । अर्दिताः विह्वलास्सर्वे प्रजानन्ति न किंचन ॥ सधूमैस्सहसार्चिर्भिर्दह्यमाना इतस्ततः । क्व तिष्ठामः क्व यास्यामः इत्यशोचन्मुहुर्मुहुः ॥ तदा प्रदक्षिणं कृत्वा साष्टाङ्गं प्रणिपत्य च । बाष्पपर्याकुला देवी भर्तारमिदमब्रवीत् ॥ चन्द्रवत्युवाच— शृणु विज्ञापनं भूप मम मा विक्लवो भव । भवान् धैर्यधनो भूत्वा ज्ञात्वा लोकभवाभवौ ॥ मरणं यस्य यत्काले विहितं पूर्वकर्मणा । अवश्यमेव गन्तव्यं तत्र सत्येन निश्चितं ॥३०॥ तस्मादहं हितं वच्मि लोकयोरुभयोरपि । आज्ञा मे दीयतामद्य सत्यलोकप्रदायिनी ॥ भर्तुराज्ञां पुरस्कृत्य हारिद्रांजनलेपना । म्रियते भर्तुरग्रे या तद्भार्याप्यन्यजन्मनि ॥ त्वदग्रे मरणं श्रेयो मम मांगल्यनायक । देहि त्वं मरणानुज्ञां यदि मे त्वं प्रियंकरः ॥ क्षणिकं चापि वैधव्यं स्त्रीणां नरकमिष्यते । न सोढव्यं च वैधव्यं विधवेति वचोऽशुभं ॥ दह्यमानमशक्ताऽस्मि वीक्षितुं त्वां नरेश्वर । अहमेव पतिष्यामि ज्वलिते हव्यवाहने ॥३५॥ त्वद्धुताज्याहुतिरिव वसोर्धारेव चाध्वरे । प्राग्जन्मशतसाहस्रतपसा तत्तु लभ्यते । महद्भिर्मरणं स्त्रीणां भर्तुरग्रे ममेश्वर ॥

मार्कण्डेय उवाच— इति राज्ञीवचःश्रुत्वा हरिश्चन्द्रो दयार्णवः । निश्चेष्टः स्थाणुवत्तस्थौ क्षुभितेन्द्रियमानसः ॥ हरिश्चन्द्र उवाच- भर्तृत्वं भरणात्पत्युः पतित्वं परिपालनात् । द्वाभ्यां हीनस्य मे राज्ञि जीवितं च निरर्थकम् ॥ अपि कीटपतङ्गानां मृगादीनांच शोभने । स्त्रियो रक्ष्याश्च पोष्याश्च तन्मैवं वक्तुमर्हसि ॥ चन्द्रवत्युवाच - अनयोर्मम वा मृत्युस्तव वा नु भविष्यति। इत्यहं नाभिजानामि कालस्य कुटिलागतिः ॥४०॥ मरणं भवतस्तावद्दैवाद्यदि समागतं। त्वया विना क्षणमपि नाहं जीवितुमुत्सहे ॥ निमेषमपि वैधव्यमहं सोढुं नहि क्षमा। अतस्त्वदग्रे मे देहं निक्षेपिष्ये हुताशने। जन्मन्यागामिनि नृप भवंदीयं भविष्यति ॥ हरिश्चन्द्र उवाच — सर्वेषामाश्रमाणां च गृहस्थो गतिरुच्यते। आधारभूता तस्य स्त्री तस्मात्त्वं गतिरुत्तमा ॥ भार्यामित्रं गृहस्थस्य हीत्याहुर्ब्रह्मवादिनः। तदशक्तस्य भवती रक्षितुं हव्यवाहनात् ॥ जीवितान्मरणं श्रेयो न मृतो रक्षितुं क्षमः। रक्षितुं त्वामशक्तोऽहं निक्षेपिष्ये कलेवरं। पुत्रस्य माता त्वं तिष्ठ माता पुत्रस्य सद्गतिः ॥४५॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने सप्तदशोऽध्यायः ॥

---

## अष्टादशोऽध्यायः ॥१८॥

चन्द्रवत्युवाच— अयुक्तमेतद्राजेन्द्र लोकवृत्तिर्विचार्यताम् । सदा सर्वजनस्यास्य सेतुरूपेण वर्तसे ॥ द्वौ भागौ पुरुषस्यैतौ स्त्रियः पुंसश्च तौ समौ । स्त्री पुंसो वामभागस्स्यात् पुमान् दक्षिणभागकः ॥ तत्र वीर्यं पुरस्कृत्य द्वौ भागौ पुरुषो रणे। प्रवर्तते महाराज स च न्यायो न लंघितः ॥ मृतं स्त्री पतिमन्वेति नानुगच्छेत्पतिस्स्त्रियम् । तस्मान्ममैव मरणं श्रेयस्ते पुरतो नृप ॥ मार्कण्डेय उवाच- पुत्रः पित्रोर्वचः श्रुत्वा क्लेशशोकाक्षरान्वितम् । उवाच पितरं श्लक्ष्णं वाक्यमुज्जीवयन्निव ॥५॥ लोहिताश्व उवाच— पितरौ रक्षतःपुत्रं

बालं रक्षति तौ सुतः। प्रवृद्धो वार्धके भावे परलोकेऽपि तौ सुतः ॥ अतस्त्वदग्रे मे देहन्यासो भवतु पावके। पुत्रस्य मरणं पित्रोः रक्षार्थं मुक्तिदं स्मृतम् ॥ तस्माद्युष्मद्रक्षणार्थं देहं निक्षिप्य पावके। ब्रह्मणः सदनं यामि त्वत्पादाब्जनिषेवणात् ॥ मार्कण्डेय उवाच— तदैवं विवदत्स्वेषु सत्यकीर्तिं महामतिम्। तं मर्तुकामं विज्ञाय विकारेङ्गितचेष्टितैः। शपथेनात्मनो राजा प्रत्यषेधन्महामतिः ॥ मार्कण्डेय उवाच— एतस्मिन्नन्तरे देवी भर्तारं सा पतिव्रता। प्रदक्षिणमुपावृत्त्य विहिताञ्जलिरब्रवीत् ॥१०॥ यदि दत्तं यदि हुतं गुरवस्तोषिता यदि। कर्मणा मनसा वाचा पतिर्मे तोषितो यदि ॥ स्वप्नावस्थाद्यवस्थासु सर्वासु च मया यदि। यदि देवाःप्रसन्ना मे मुनयस्तोषिता यदि ॥ हरिश्चन्द्रो हि मे भर्ता भवेज्जन्मनि जन्मनि। परोपकारशीलस्तु प्राणैरपि धनैरपि ॥ इत्थं त्रिशंकुजो राजा जन्मायुतशतेष्वपि। सत्यवांश्च दयावांश्च सर्वलोकहिते रतः ॥ इति सप्रार्थ्य देवेशं बध्वा परिकरं दृढम्। कृताञ्जलिपुटा भूत्वा स्मरन्ती पतिमात्मनः ॥१५॥ शीतं हृदं यथा मत्सी प्रविवेश हुताशनम्। आज्याहुतिरिव क्षिप्रं विरराज हुताशने ॥ तत्पातिव्रत्यतिग्मांशोः सहस्राधिकतेजसः। प्रशशाम दवाग्निस्सः तेजोरुस्पर्धितेजसः ॥ पातिव्रत्य महातेजः प्रलयानलसन्निभम्। अत्यरिच्यत दावाग्निमर्कतेज इवानलम् ॥ दावाग्नौ प्रमृता ये च मृगपक्षिसरीसृपाः। मक्षिका मशका दंशास्सर्पास्तैस्सह तद्वनम् ॥ पलाशपुष्पस्तबकफलगुच्छसमृद्धिमत्। अभवत्तद्यथा पूर्वं सुस्फीतं सर्वतश्शुभम् ॥२०॥ वह्निमन्तर्हितं दृष्ट्वा शीतलं तद्वनं तथा। पातिव्रत्यं महातेजः पातिव्रत्यमहो महो ॥ त्वत्प्रसादान्महादेवि मोचितो हव्यवाहनात्। गच्छामस्तां पुरीं काशीं विश्वनाथपरिग्रहाम् ॥ मृतानां यत्र जन्तूनां साक्षाद्विश्वेश्वरो हरः। सोमश्स्त रति कर्णेषु तारकं भवतारकम् ॥ इत्युक्ता पतिना साध्वी दण्डवत्प्रणिपत्य च। विनयावनता भूत्वा भर्तारमिदमब्रवीत् ॥ चन्द्रवत्युवाच—

वक्तव्यमित्थं किं भूप तारितोऽहं त्वयेति ह। किं सामर्थ्यं स्त्रियो लोके किंकर्यास्ते नरेश्वर ॥२५॥ भर्तुराज्ञावशायाश्च सर्वं तत्पत्युरेव च। या पूज्यमाना पतिना स्तूयमाना च गर्विता॥ सा जायते मृता भूमौ चण्डालश्रेणिसूकरी। तन्नाहं भवता स्तुत्या नोपश्लाघ्या कदाचन॥ जगत्सृष्ट्यादिसामर्थ्यं विद्यते हि स्त्रियो यदि। तद्भर्तुः पादशुश्रूषा वैभवं नान्यदेव हि॥ स्ववशे पतितं नारी रूपसामर्थ्य-गर्विता। करोति या सा राजेन्द्र चण्डालश्रेणिसूकरी॥ तद्भवत्पाद-शुश्रूषा संप्राप्ताऽशेषवैभवा। नोपश्लाघ्या यतो दासी भवदुच्छिष्ट-सेविनी ॥३०॥ मार्कण्डेय उवाच— निशम्येति वचस्तस्यास्समा-लिङ्गय त्रिशंकुजः। आशीर्भिर्वर्धयित्वा तां समाश्वासयदच्युतः॥ तद्वनादथ निर्गत्य स राजा धर्मनन्दन। स्त्रीपुत्रमन्त्रिसहितो विश्वनाथ-प्रियां पुरीम्॥ दृष्ट्वा प्रमोदभरितो दानवारिसमो बले। अवाप परमां प्रीतिं सर्वाशुभविनाशिनीम्॥ अपश्यत्परमप्रीतः तां पुरीं सुमनोहरां। प्राकाराट्टालसंयुक्तां रथ्यापणसुचत्वरां॥ राजमार्गेण महता विस्तीर्णेन विराजितां। समाधिपूजनायुक्तैर्वेदवदाङ्गपारगैः ॥३५॥ योगज्ञैर्जीववश्यैश्च कामक्रोधविवर्जितैः। अत्यक्तस्वाश्रमाचारैर्गृहस्थै-र्ब्रह्मचारिभिः॥ वानप्रस्थैर्यतीन्द्रैश्चाप्यग्निहोत्रपरायणैः। शौर्यादि-गुणसंपन्नैर्ब्रह्मण्यैर्ब्रह्मवत्सलैः॥ वदान्यैः क्षत्रियैश्चैव सर्वक्रतुषु दीक्षितैः। वैश्यैस्स्वकर्मसंयुक्तैश्शूद्रैश्शुश्रूषणे रतैः॥ स्त्रीभिश्च पुरुषै-श्चैव रूपलावण्यशालिभिः। गोभिरश्वैर्गजैरुष्ट्रैस्सदा संभावितां शुभां॥ आम्रादिसुवनोपेतां पुष्पारामसुगंधिनी। सनारिकेलकदलीं पूगी-वनपरिष्कृतां ॥४०॥ वापीकूपतटाकैश्च सरोनदनदीह्रदैः। मत्स्य-कासारकेदारैः कुमुदोत्पलमंडितैः॥ पद्मेदीवरकल्हारजलजादिपरि-ष्कृतैः। हंससारसकोयष्टिदात्यूहवरटाह्वयैः॥ सारिकाशुकसारङ्गैः कोकिलैर्जालपादकैः। कोयष्टिकैः टिट्टिभकैर्जलवायसकुक्कुटैः॥ जलजैःस्थलजैरन्यैः पक्षिभिश्च समाकुलैः। हृष्टपुष्टप्रमुदितैः परमा-

नन्दनिर्भरैः ॥ चन्द्रशेखरपादाब्जसरणस्तुतिपूजकैः । स्त्रीबालयुववृद्धैश्च भूषणांबरलेपनैः ॥४५॥ शिवसारूप्यसालोक्यसायुज्येष्वभिकांक्षिभिः । योगिभिर्मुनिभिस्सिद्धैरत्यन्तं तत्वकोविदैः ॥ सौवर्णैरजतैश्चैव स्फटिकैश्चन्द्रकैस्तथा । नवरत्नमयैश्शुभ्रैश्शिलावालुकनिर्मितैः ॥ विद्रुमैस्सूर्यकांतैश्च कांस्यलोहविनिर्मितैः । पारदैस्त्रपुसीसैश्च यज्ञवृक्षविनिर्मितैः ॥ साङ्गायुधैस्सवाहैश्च सशक्तिपरिवारकैः । सर्वानुलेपमाल्यैश्च सर्वांबरविभूषितैः ॥ सुविशालालयैश्शुभ्रैस्स्वर्णप्राकारतोरणैः । गोपुराट्टालशृङ्गैश्च प्राकारैश्चैव संस्थितैः ॥५०॥ पुष्पारामद्रुमारामपरीतैः परितो दिशम् । येषां स्मृत्या कीर्तनेन चतुर्वर्गफलप्रदैः ॥ प्रतिमा शिवलिङ्गैश्च निरन्तरसमर्चितैः । एतैर्मनोहरैरन्यैरद्भुतैरतिशोभिताम् ॥ ते दृष्ट्वा तां पुरीं रम्यां मनोनयननन्दिनीम् । प्रमोदं परमं प्रापुश्चत्वारस्ते महौजसः ॥ ते पुरस्तात्प्रवहती गङ्गां देवर्षिसेविताम् । सर्वदेवकृतावासां सेवकाघौघनाशिनीम् ॥ भगीरथस्य सत्कीर्तिं वर्धयंती स्वतेजसा । सीमन्तभूतां भूदेव्याः शूलिमौलिविहारिणीम् ॥५५॥ अकामानां सकामानां स्मरतां निर्मलात्मनाम् । तनुत्यजां स्वके तीरे मुक्तिं पञ्चविधां नृणाम् ॥ प्रयच्छन्ती ययुर्मोदं दृष्ट्वा गङ्गां सरिद्वराम् । यथाश्रद्धं यथाकामं तर्पयित्वा सुरोत्तमान् ॥ जप्त्वा च वैदिकान् मन्त्रान् नमस्कृत्य दिवाकरम् । संपूज्य गङ्गां राजेन्द्रः प्राविशच्छम्भुमन्दिरम् ॥ आगमोक्तेन विधिना समाराध्याम्बिकापतिम् । प्रदक्षिणं परिक्रम्य स्तुत्वा नत्वा प्रसाद्य च ॥ स्वाभीप्सितं च संप्रार्थ्य ध्यात्वा चैक्येन वाक्पतिम् । ततो निर्गत्य तां सर्वां पुरीमालोक्य सर्वतः ॥६०॥ सायं सन्ध्यामुपास्याथ जप्त्वा हुतहुताशनाः । विश्वनाथालये रात्रौ जागरञ्च प्रचक्रिरे ॥ व्युष्टायामथशर्वर्यां दृष्ट्वा सूर्योदयं पुनः । प्रतप्यते महीपालो विचार्य मुनिदक्षिणाम् ॥ तेषां निवसतां तत्र मासोऽगाद्विदिनं विना ।

एकोनत्रिंशे संप्राप्ते वासरे ते महापुरीम्। आलोकयन्तः सर्वत्र चेरुस्ते वीथिवीथिशः ॥६३॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने अष्टादशोऽध्यायः

## एकोनविंशोऽध्यायः ॥१९॥

मार्कण्डेय उवाच— एतस्मिन्नन्तरे राजन् ब्राह्मणो विभवान्वितः। सुवर्णभारमासज्य स्कन्धे सार्धं द्विजोत्तमैः॥ अतिस्थूलप्रमाणश्च प्रहृतस्वर्णभारकः। व्रजतां पुरतस्तेषां प्रादृश्यत महापथे॥ ततश्चन्द्रवती दृष्ट्वा धनाढ्यं धनवाहकम्। उवाच श्लक्ष्णया वाचा भर्तारमतिमानिनम्॥ त्रयाणामपि वर्णानां पिता ब्राह्मण उच्यते। पितृद्रव्यं हि पुत्रेण गृहीतव्यं न संशयः॥ तालजंघो महाराजः भार्गवाणां पुरा धनम्। याचयित्वा गृहीत्वा च राज्यस्थश्चाभवत्किल ॥५॥ तस्मात्त्वमपि राजेन्द्र याचयस्व महाधनम्। नूनं दास्यत्यसौ विप्रो विज्ञप्तव्यं त्वया द्विजे॥ आपद्यपि महत्यां च ब्राह्मणेभ्यो हि भूपतिः। लब्ध्वा धनं समुत्तीर्य स्वापद्भ्यस्तान् पुनर्यजेत्॥ इति श्रुतं मया पूर्वं ब्राह्मणेभ्योऽथ भूमिप। याचिते न भवेत्पापं तद्याचय धनं द्विजात्॥ मार्कण्डेय उवाच— इति पत्नीवचः श्रुत्वा विपद्युचितमात्मवान्। अन्वगच्छद्द्विजवरं पत्नीमित्यूचिवान्नृपः॥ हरिश्चन्द्र उवाच— किं किं ब्रूहि पुनर्ब्रूहि श्रुतं सम्यङ्मया नहि। न भेतव्यं त्वया राज्ञि पुनःसम्यक् वदस्व मे ॥१०॥ पुनस्साकथयामास पूर्वमुक्तं पुनःपुनः। प्रणम्य सान्त्वयित्वैनं कृताञ्जलिपरिग्रहा॥ यथाकालानुवर्तीस्याः दैवारोपितपौरुषः। दैवमेवानुवर्तस्व यथाकालं यथाबलम्॥ दैवं करोति राजानं दातारं भिक्षुकं नरम्। कर्तारं स्वामिनं भृत्यं पूज्यं वाग्मिनमेव च॥ पुनस्तमेव कुरुते दासं याचकमेव च। मूढं बधिरमुन्मत्तं सेवकं जडमेव च॥ अवाग्मिनं च मूर्खं च विरूपं विकलेन्द्रियम्। दत्वा याचन्ति पुरुषाः हत्वा हन्यन्त एवहि ॥१५॥ पातयित्वाऽथ पात्यन्ते नरा भाग्यविप-

र्यये। स्थितं पूर्वं जलं यत्र तत्र तिष्ठेत्पुनर्जलम्॥ तथैव मानवाः पुष्टाः-रिक्ताः पुष्टा भवन्ति हि। तथा भवानद्यरिक्तः पुनः पुष्टो भविष्यसि॥ प्रतिगृह्य धनं विप्रात् दत्वा कौशिकदक्षिणाम्। अनृणो भव राजेन्द्र दैवाच्छ्रीमान् भविष्यसि॥ हरिश्चन्द्र उवाच— नाहं प्रति-ग्रहधनो याचमान इव द्विजः। नोत्तानीकृतहस्तोऽहं दातुः स्वर्गं प्रद-र्शयन्॥ अवाक्करोऽहं सुश्रोणि गृहीतुर्दुर्गतिं ददन्। षट्कर्मिणो ब्राह्म-णाहि क्षत्रियाश्च त्रिकर्मिणः॥२०॥ यजनं याजनं चैवाध्यापनाध्य-यने तथा। दानं प्रतिग्रहश्चैव षट्कर्म ब्राह्मणे स्मृतम्॥ दानमध्य-यनं चैव यजनं विहितं नृपे। देहीति द्व्यक्षरं विप्रे ददामीति सुलो-चने॥ त्र्यक्षरं पार्थिवे नित्यमिति ब्रह्मविनिर्मितम्। रसभोज्यान्नभु-ग्विप्रो रक्तमिश्रान्नभुङ्नृपः॥ पौरोहित्येन विप्रेण प्रवृद्धे क्षत्रिये धने। अनुग्रहपरो विप्रः क्षत्रियः पालकः स्मृतः॥ गृहीता ब्राह्मणः क्षत्राद्दाता विप्राय पार्थिवः। नाहं प्रसारये हस्तं देहीति वचनं वदन्॥२५॥ दर्शयन् दन्तपङ्क्तिं चाप्येरण्डदलवच्छुभे। यजना-ध्ययने दानं शौर्यं तेजः पराक्रमः॥ धैर्यं दाक्ष्यं पालनं च युद्धे चाप्यपलायनम्। शरणागतानामभयं चोरदुष्टविमर्दनम्॥ एतानि क्षत्रधर्माणि नचैवोक्तः परिग्रहः। न मे जिह्वा प्रसरति देहीति वचनं प्रति॥ ददामीत्येव मे देवि हृदि वाचि च तिष्ठति। मानसं मम सत्पात्रे रसनायां ददामि च॥ हस्ते वारि धनं भद्रे कथं हस्तं प्रसारये। याचित्वा ब्राह्मणद्रव्यं ब्राह्मणाय ददाति यः॥३०॥ दातुर्दानफलं नास्ति यस्यार्थस्तस्य तत्फलम्। खात्वा गर्तं समे देशे निम्नं पूरयतोऽशुभम्॥ खात्वोन्नतं च विषमं निम्नं पूरयतः शुभम्। तद्गृहीत्वा द्विजद्रव्यं नाहं दद्मि द्विजाय हि॥ चन्द्रवत्युवाच— भवान्परवशो राजन् कालस्य वशगो हि भोः। करोति कालः पुरुषं दातारं चार्थयाचकम्॥ कर्मिणं येन मार्गेण वर्तते च तदन्वयः। काले चारोपितोद्योगः कालारोपितपौरुषः॥ यया कयाचिद्विधया

बह्वन्नं प्राप्नुयान्नरः। रिक्तताऽरिक्तता चोभे दिवारात्रिसमे नृप। पुरुषं प्रतिपद्येते नोत्सुको न च सन्तपेत् ॥३८॥ हरिश्चन्द्र उवाच— असिना तीक्ष्णधारेण जिह्वाच्छेदो द्विधा वरः। देहीति वचनं नोक्त्वा दातारमभिवीक्ष्य च॥ किंचात्मनः परित्यागो वरो देहीति याचनात्। विश्वस्तं यन्मया सत्यं धर्मश्च परमोऽबले। अस्माद्दिनद्वयादन्तस्तौ दद्यातां धनं मम॥ चन्द्रवत्युवाच— एवं चेत्संमतं सत्यमितोऽन्यद्वचनं शृणु। तथ्यं हितं च पथ्यं च लोकयोरुभयोरपि॥ राजन्विक्रीय मां क्वापि गुर्वर्थः संप्रदीयताम्। लोहिताश्वं च ते पुत्रमात्मानं महतो ऋणात् ॥३९॥

इतिश्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने एकोनविंशोऽध्यायः

## विंशोऽध्यायः ॥२०॥

मार्कण्डेय उवाच— श्रुत्वैतद्वचनं पत्न्याः श्रुत्याचारसमन्वितम्। मूर्छापरिप्लुतो राजा पपात धरणीतले॥ आश्वासितस्तदा राजा भार्ययांच सुतेन च। शीतोपचारैर्वचनैः परमार्थार्थसंयुतैः॥ संत्यज्यतां विषादोऽयं ज्ञात्वा कालं बलोत्तरम् कालयुक्तं कुरुष्वार्य समीपस्थं ऋणं महत्॥ हरिश्चन्द्र उवाच— विक्रीय भवतीं भद्रे गतिः का नु भवेन्मम। भार्याधीनौ गृहस्थस्य स्वर्गमोक्षौ न संशयः॥ पुन्नाम्नो नरकात्त्रातुः पुत्रस्यैव हि पुत्रता। पुत्रेण लोकान् जयति श्रुतिरेषा सनातनी ॥५॥ विक्रीय तं च पुत्रं मे कुतो लोकाः शुभा मम। भार्याविक्रयिणो लोकाः पुत्रविक्रयिणस्तथा॥ नरकाणि प्रपद्यन्ते यावदिन्द्राश्चतुर्दश। कीर्तिर्मित्राणि वित्तं च भार्याबन्धुर्गृहे सतः॥ भार्यैव श्रीर्गृहस्थस्य भार्या गौरी सरस्वती। सर्वं भार्या गृहस्थस्य भार्याहीनः पुमान् मृतः॥ भार्याहीनः पुमान् लोके सर्वसत्कर्मगर्हितः। अभार्यस्य सुखं शून्यमभार्यः सर्वतःपशुः॥ अपुत्रस्य गृहं शून्यमपुत्रस्य कुलं मलम्। अपुत्रस्य कुतो लोकाः अपुत्रस्य कुतः प्रियम् ॥१०॥ अभार्याय न दातव्यं नापुत्राय कदाचन। अपुत्रभार्यो लोकेऽस्मिन्

चिताकाष्ठो निराश्रमी। विक्रेष्यामि कथं भद्रे त्वामहं वरवर्णिनीम्॥ चन्द्रवत्युवाच— विक्रेतुर्नरकोभार्या द्यूतार्थं नृपसत्तम *॥ न द्यूतहेतोर्नच पानहेतोर्नराज्यहेतोर्न च कामहेतोः। विक्रीयसे मां नरदेवदेव सत्यप्रतिज्ञापरिपालनाय॥ विक्रीय मां स्थापय सत्यधर्मौ सुतं च चावां सदने मुरारेः। त्वां मोचयित्वा महतो ऋणाब्धे*रुद्धाह्य यज्ञैर्यज देवराजम्॥ मार्कण्डेय उवाच— मनस्याधाय तद्वाक्यं भूताविष्ट इवाभवत्। स्थाणुपाषाणवद्राजा निश्चलोऽनिमिषेक्षणः॥ अथाश्वस्तो मुहूर्तेन दीर्घमुष्णं विनिश्वसन्। अन्तर्मनसि हुंकृत्य दुनोति मनसा विधिम्॥१५॥ अहमेवंविधं पापं पूर्वजन्मन्यकारिषम्। अपराधो मया सृष्टः ततः क्लेशयसे हि माम्॥ मार्कण्डेय उवाच— सीदमानमिमं भूपमुपेत्यावोचदात्मजः। लोहिताश्वः सांत्वयित्वा पितरं पितृभक्तिमान्॥ विक्रीणीष्व सुतं भार्या त्वदीयद्रव्यमेव नौ। कः क्लेशस्ते काऽनुचिन्ता त्वदीयद्रव्यविक्रये॥ ब्रह्मद्रव्यं ऋणं घोरं किमर्थं त्वयि तिष्ठति। आरुहद्विषसङ्काशमहिदष्टविषं यथा॥ अदातुस्तेत्वेकदिनं मासस्यास्यावशेषितम्। तदन्तरे च दातव्या विश्वामित्रस्य दक्षिणा॥२०॥ मार्कण्डेय उवाच— एवमुक्तस्स पुत्रेण भार्यया च विधेर्बलात्। अवतार्य सुतं पत्नी स राजा पाण्डुनन्दन॥ उच्चैरुद्घोषयामास विक्रीणामि स्त्रियं सुतम्। स्वपत्नीमौरसं चैव वाञ्छा चेत्प्रतिगृह्यताम्॥ तं शब्दं सहसा श्रुत्वा नाम्नाऽसौ कालकौशिकः। अहं गृह्णामि दारांस्ते दासार्थं भवतः सुतम्। कैथयस्वोभयोर्मूल्यं निश्चितं मम कथ्यताम्॥ हरिश्चन्द्र उवाच— क्रीणामि ब्राह्मणे पत्नी क्षत्रियस्य सुतं तथा। मन्वादिस्मृतिसंप्रोक्तं मूल्यं मे दीयतां द्विज॥ कालकौशिक उवाच— स्वयमेव भवान् ब्रूहि शास्त्रोक्तं मूल्यमुत्तमम्। त्वत्कल्पितं प्रमाणं मे सत्यं सर्वेषु शोभनम्॥२५॥ हरिश्चन्द्र उवाच— क्षत्रस्त्री पञ्चशतिका विप्रार्थं निष्कसङ्ख्यया। क्षात्रः सहस्रसङ्ख्याक इति शास्त्रविदो विदुः॥ कालकौशिक उवाच-

स्मृत्युक्तमुदितं मूल्यमहं दास्यामि ते नृप । गृहीत्वा पुत्रदारान्मे दासीदासार्थमर्पय ॥ हरिश्चन्द्रस्तदादाय मूल्यं विप्रसमर्पितम् । गृहीत्वा दक्षिणं हस्तं पुत्रं विप्रकरेऽर्पयत् ॥ उशीनरसुतायाश्च केशं विप्रकरेऽर्पयत् । तावुभौ दक्षिणाहस्तं प्रणामं चक्रतुर्नृपम् ॥ पाशेन बद्ध्वा तां पृष्ठे लोहिताश्वं च पृष्ठतः । नेतुमैच्छत्पाशपाणिः कौशिकः कालपूर्वकः ॥३०॥ तावत्प्रदक्षिणीकृत्य ततश्चन्द्रवती नृपम् । दण्डवत्प्रणिपत्याह भर्तारं विनताननम् ॥ पिता माता सुता भ्राता भर्ता जन्मनि जन्मनि । सुलभा राजशार्दूल मोक्षसोपानपद्धती ॥ सत्यधर्मौ न सुलभौ तन्न शोचस्व मत्कृते । त्वदग्रे मरणं वा मे विक्रयो वा सुतस्य च ॥ प्रतिज्ञापालनार्थं ते ह्यावयोर्मुक्तिदं नृप । इत्युक्त्वा पादयोस्तस्य दण्डवत्प्रणिपत्य च ॥ कृताञ्जलिपुटा भूत्वा नत्वा देवान् दिशो ऋषीन् । प्रणिपत्य सवित्रे सा मनसा ध्याय भूपतिम् । बाष्पपर्याकुलं दीनं भर्तारमिदमब्रवीत् ॥३५॥ शृण्वन्तु देवा ऋषयः ससिद्धाः दिशां च नाथाः विदिशां च नाथाः । नभस्सशब्दं सगुणस्स वायुस्तेजस्सरूपं सरसास्तथापः ॥ पृथ्वी सगन्धा रविचन्द्रकौच दिवाच रात्रिश्च तथैव सन्ध्ये । भूतानि सर्वाणि चराचराणि स्थूलानि सूक्ष्माणि मम प्रतिज्ञाम् ॥ एकस्य चाहमेतस्य जाया यद्यस्मि भूतले । निर्दोषबीजक्षेत्रौच सत्यधर्मपरायणा ॥ दयादाक्षिण्यसौजन्यसयुक्ता सर्वजन्तुषु । पतिजीवा पतिप्राणा पतिधर्मपरायणा ॥ प्राणोत्क्रमणकालेऽपि यदि मे पतिसंस्मृतिः । कथास्वहं पतिकथा कर्मण्यपि पतिक्रिया ॥४०॥ पतिपादोदकस्नाना पत्युच्छिष्टभुजिक्रिया । यद्यमुष्मिन् जगत्यस्मि सदेवासुरमानुषे ॥ सहगन्धर्वयक्षेच भुवने सर्वदेव हि । रूपलावण्यशीलैश्च शौर्यवीर्यपराक्रमैः ॥ परोपकारसौजन्यदाक्षिण्यप्रियवाचनैः । दयया सत्यशौर्याभ्यां सत्वेन च बलेन च ॥ ह्रिया श्रिया भिया चैव श्रद्धया च तितिक्षया । औदार्येणच दातृत्वे प्रियभावेच सर्वदा ॥ आचारबुद्धिनियमैः प्रियसत्याभिभाषणैः । आर्जवेन च सर्वत्र मृदुपू

र्वाभिभाषणैः॥४५॥ ऐश्वर्येण च संपत्त्या प्रभावोत्साहसाहसैः । प्रजासङ्ग्रहणेनैव प्रजासंरञ्जनेन च ॥ निग्रहानुग्रहाभ्यांच शिष्टाशिष्टजनेषु च । धर्मबुद्ध्या च सततं विद्वत्सङ्ग्रहणेषु च ॥ एवमादिभिरन्यैश्च सद्गुणैर्लोकविश्रुतैः । हरिश्चन्द्रमृतेनान्यं स्मरामि च वदामि च ॥ न शृणोमि न पश्यामि नालपामि कदाचन । मया दत्तं च यत्किंचित्पत्यनुज्ञापुरस्सरम् ॥ यदि तप्तं यदि कृत तर्पिता ब्राह्मणा यदि । अनिद्राभोजनरता भर्तृशुश्रूषणे रता ॥५०॥ मया सुतोषिता श्वश्रूः श्वशुरश्च सुतोषितः । अतिथिस्तोषितःकाले*भर्तृवर्गस्सुतोषितः ॥ अग्नयस्तोषिताश्चस्युस्सायंप्रातरतन्द्रया । सत्वेनाऽनेन मे देवा भानुवंशाब्धिचन्द्रमाः ॥ त्रिशंकुहृत्पद्ममित्रो हरिश्चन्द्रः प्रतापवान् । जन्मान्तरसहस्रेषु मम भर्ता भवत्वयम् ॥ विक्रीणातु स्वयं राजा स्वयंधनतया यतः । हंतु पातु दहत्वेष स मे भर्ता भविष्यति ॥ लोहिताश्व उवाच— जन्मान्तरसहस्रेषु हरिश्चन्द्रः पिता मम । तस्य पुत्रो भविष्यामि देवाश्चेति च वादिनौ । पततुः पादयो राज्ञो भक्तिप्रवणचेतसौ ॥५५॥ मार्कण्डेय उवाच— पादयोःपतितौ दृष्ट्वा भार्यापुत्रौ नृपोत्तमः । हाहा हाहेति हाहेति हन्त हन्त विधे विधे ॥ उद्धृत्य हस्तौ प्राक्रोशन्मुक्तकण्ठो महीतले । रराज पतितो राजा रसयाऽऽलिङ्गितःप्रियां । मा विषादं कृथा राजन् भूयस्त्वामुपयाम्यहम् ॥ इत्थं तदाऽऽश्वासितोऽपि निश्चैतन्योऽभवन्नृपः । लब्धसंज्ञस्समुत्थाय दृष्ट्वा तौ पाशसंयतौ । विवृतास्यस्ततो राजा विललापोन्नतस्वनम् ॥ वृक्षो यथा निजछायां न जहाति कदाचन । तथैवाहमिमां देवी कदाचिन्नात्यजं पराम् ॥ त्यक्त्वा मा वल्लभं देवि कुत्र यासि कुलाङ्गने । का मे गतिःक्व यास्यामि को मे प्रशमयेच्छुचम् ॥६०॥ राज्यत्यागान्नमे दुःखं वनवासान्नचोद्विजे । यः पुत्रेण वियोगो मे स मां दहति सांप्रतम् ॥ इक्ष्वाकुवंशसंभूतस्सार्वभौमपदोचितः । दासत्वं प्रापितः पुत्रो मम कुक्षौ न जायताम् ॥ विक्रीयत्वामहं पुत्र पित्रादीनां कथं

भवेत्[120]। अनृणत्वे हि मे लोकाः न सन्ति तव विक्रयात्॥ इतोप्युपरि मःदुखं सागरांभसि मज्जितम्[121]। को मे विनोदयेदुःखं त्वामृते सूनृतात्मज॥ स्मृतिमात्राञ्जसासिद्ध्या सर्वकार्यस्य सांप्रतम्। अकिंचनस्य पापस्य दैवोपहतसंपदः॥६५॥ द्रव्येण कार्यमापन्नं द्रव्यं चापि न मेऽण्वपि। युवां विक्रीय द्रव्यार्थं प्रतिज्ञापालनं कृतम्। दग्ध्वा मलयजं यद्वत्तदङ्गारैरयःक्रिया॥ मार्कण्डेय उवाच— इतिप्रलपतस्तस्य पश्यतो राजसत्तम। बध्वा दृढतरं पृष्ठे तौ पाशैः कालकौशिकः। ताडयंश्च कशाघातैर्निनाय स्वगृहं द्विजः॥६७॥

॥इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने विंशोऽध्यायः॥

## एकविंशोऽध्यायः॥२१॥

युधिष्ठिर उवाच—कोऽयं द्विजो द्विजश्रेष्ठ नाम्ना यः कालकौशिकः। तेन नीतौ किं कुरुतां मातृपुत्रौ द्विजालये॥ बहुस्वर्णस्य यज्ञस्य दक्षिणां दत्तवान् कथम्[122]। कुत्र लब्धं धनं तेन सर्वमेतद्वदस्व मे॥ मार्कण्डेय उवाच— शृणु राजन्कथां पुण्यां ब्रह्महत्यापहारिणीम्। यस्याःश्रवणमात्रेण हयमेधफलं लभेत्॥ यः कालकौशिको नाम्ना विश्वामित्रः स एव हि। अभिमानच्युतिर्लोके सर्वप्राणिषु दुःसहा॥ मानभंगं विधायापि राज्ञा वाचयितुं मृषा। भूत्वा जानपदो विप्रः क्रीत्वाऽस्य महिषी सुतम्॥५॥ हरिश्चन्द्रस्य चक्रेऽथ दुःसहं दुःखमंजसा। तथापि नाचलत्सत्यात्सत्यसन्धस्त्रिशंकुजः॥ अथ नक्षत्रकः शिष्यः कौशिकस्य महातपाः। श्रावयन् कर्णकटुकं राजानं वचनं रुषा॥ आगत्यायाचत द्रव्यं यज्ञीयं कौशिकस्य च। ददस्व दक्षिणां राजन्नधुनैव गुरोर्मम॥ कौशिकाय पुरा दत्ता यागाय रघुनन्दन। तां ददस्वाधुनैव त्वं यदि सत्यव्रतो भवान्॥ हरिश्चन्द्र उवाच— अभिवादये त्वां विप्रेन्द्र वर्मणाऽनुगृहाण माम्। यथावर्णानुरूपेण ममाशीर्वचनं कुरु॥१०॥ अभिवाद्येति भूपालो विश्वामित्रस्य तद्धनम्। निधाय पुरतस्तस्य नक्षत्रस्य च दर्शितम्[123]॥ नक्षत्र

उवाच—कुतः समार्जितं द्रव्यं त्वया स्वल्पमिदं कथम्। अन्यायार्जितमेतत्ते न गृह्णाति मुनीश्वरः॥ हरिश्चन्द्र उवाच–धनागमेन घोरेण किं पृष्टेन द्विजोत्तम। शोकस्ते जायते श्रुत्वा गृह्यतामिदमच्युत॥ नक्षत्र उवाच–- शिष्योऽहं कौशिकस्येह दया मम न विद्यते। द्रव्यस्यागमनं राजन् कथयस्व यथायथम्॥ किं शैत्यं विद्यते चाग्नेः किं दया विद्यते मम। गुरोरपि दया नास्ति त्वयि गाधिसुतस्य च॥१५॥ हरिश्चन्द्र उवाच–- स्त्रीपंश्चशतनिष्कस्य विक्रीता मे द्विजन्मने। लोहिताश्वस्सहस्रेण गृहाणेदं मयाऽऽर्जितम्॥ नक्षत्र उवाच— बहुस्वर्णस्य यज्ञस्य नैषा संपूर्णतामियात्। संपूर्णां दक्षिणां देहि त्वयोक्तां कुशिकात्मजे॥ हरिश्चन्द्र उवाच— अध्यर्धदिवसो विप्र मासस्यास्य हि विद्यते। भानोश्चास्तमयात्पूर्वमद्य वा द्विजसत्तम॥ दास्यामि दक्षिणां माभूर्व्यथितो रुषितोऽपि वा। अतीते समये पश्चाद्यथेच्छं कर्तुमर्हसि॥ मार्कण्डेय उवाच– इत्युक्त्वा तं विसृज्याथ राजन्निक्ष्वाकुनन्दनः। सुस्नात्वोत्तरवाहिन्यां भागीरथ्यां प्रजेश्वरः॥२०॥ विश्वेशं स समाराध्य स्वान्तर्यजनवर्त्मना। सौरैर्हिरण्यमन्त्रैश्च ऋग्यजुस्सामाथर्वणैः॥ आपन्नार्तिहरं भानुमुपस्थातुं प्रचक्रमे। दक्षांघ्र्यंगुष्ठं निष्पीड्य वसुधातलमास्थितः॥ सव्य विन्यस्य लिङ्गोर्ध्वं तत्पाणिस्पृष्टहृत्तलः। सव्येतरज्ञानमुद्रासंस्पृष्टब्रह्मरंध्रकः॥ ईषदुन्मील्य नासाग्रलक्षीकृतविलोचनः। इन्द्रियाणीन्द्रियार्थांश्च स्वेषु स्थानेषु युक्तधीः॥ संस्थाप्य ब्रह्मनाड्यन्तर्देहाकाशे तु संस्थितं। आत्मैक्येन विवस्वन्तं भावयन्नन्तरात्मनि॥२५॥ अचलःस्थाणुवत्तस्थौ निस्तरंगार्णवो मुनिः। एवं समाधिसंपन्ने महाराजे महात्मनि॥ प्रादुरासीत्तमोरातिर्जगन्मित्रो विभावसुः। मुहूर्ताद्योगवैशिष्ट्यादंजसा प्रीतिमान्नृपे॥ अथोवाच त्रयीनाथः पाणिना शिरसि स्पृशन्। राजानं पूरयन्नाशाः स्थित्वा विष्णुपदेऽग्रतः॥ उपारमस्व योगात्त्वमागतोऽहं वरप्रदः। अद्य रात्रौ समास्तीर्य

कुशान्पूर्वाग्रसंस्थितान् ॥ तस्मिन्नावाह्य लेखेशमिष्ट्वा गन्धाक्षतादिभिः। संप्रार्थ्य च मतं स्वस्य तस्मिन्नातिष्ठ वाग्यतः ॥३०॥ मनस्याधाय मन्मूर्तिं जाग्रन्नासूर्यदर्शनम्। व्युष्टायां तु रजन्यां त्वं मामुपस्थाय युक्तधीः ॥ वयःसुपर्णमन्त्रेण विश्वानीति च मन्त्रतः। विक्रीणाम्यहमात्मानं दक्षिणार्थं गुरोर्मम ॥ क्रेता गृह्णातु मूल्येन यो वा को वा महीतले। अटस्व नगरीमित्थमुद्घोषय जनेश्वर। इत्थमादिश्य मार्ताण्डस्तत्रैवान्तरधीयत ॥ मार्कण्डेय उवाच— उपदिश्य गते भानौ तत्तथैवाकरोन्नृपः। रात्रावुषसि चोत्थाय समाराध्य दिवाकरम् ॥ उत्थाय सहसा राजा श्रीमान्सत्यपराक्रमः। उच्चैरुद्घोषयामास पुमान् विक्रीयते मया ॥३५॥ मार्कण्डेय उवाच— शृण्वद्भुततरां राजन् हरिश्चन्द्रकथां शुभाम्। शांतिशोकरसाधारां निस्सीमकरुणाकराम् ॥ नूनं स्मरणमात्रेण चण्डालस्पर्शदोषहाम्। पुण्यश्लोको हरिश्चन्द्रः तद्वर्णनरसोत्कराम् ॥ एतस्मिन्नन्तरे राजन् जरापलितविग्रहः। बृहच्छिरा महाश्मश्रुः शिपिविष्टो *महाशिरः ॥ ह्रस्वग्रीवः शूर्पकर्णो गर्ताक्षो मदविह्वलः। अतिस्थूलाधरोष्ठश्च गर्तानतनसोऽसितः ॥ सर्वाङ्गश्वेतरोमालिः कर्णनासाग्ररोमवान्। ह्रस्वपादो दीर्घजङ्घः स्थूलोरुः कृशजानुकः ॥ ४० ॥ स्थूलोन्नतश्रोणितटो गर्तपृष्ठोन्नतोदरः। आगलत्पीतमदिरो हस्तावष्टब्धदण्डकः ॥ विपरीतगतिर्मार्गे प्रस्खलन्वै पदे पदे। झर्झरासक्तवामांसो मदादर्धोक्तवाक्यवान् ॥ एवमागत्यचण्डालो राजानं तमुवाचह। अहं गृह्णामि दासार्थं मूल्यं गृह्णीष्व तेप्सितं। मूल्यमाचक्ष्व मे शीघ्रं कियन्मूल्यो भवानिति ॥ हरिश्चन्द्र उवाच— नीलकण्ठस्वरा वाणी परुषा कर्णवेधिनी। नूनं स्वरेण घोरेण रूपेण परुषेण च ॥ मम पापवशान्नूनं चण्डालोऽयं भविष्यति। लक्षयोजनविस्तारे जम्बूद्वीपे न सन्ति किम् ॥४५॥ ब्राह्मणाः वेदविद्वांसस्तेषु क्रेता च नास्ति माम्। शौर्यादिगुणयुक्तायां क्षत्रजात्यां न कोऽपि किम् ॥ वैश्ये शूद्रे स्वधर्मस्थे

क्रेता कोऽपि न मां भुवि। अहो मे महदाश्चर्यं तवेच्छाचरितं विधे॥ वसुधायां विशालायां चण्डालं मामदर्शयः। एतावतोऽपराधः कः निष्कारुण्यविधे मयि ॥४८॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने एकविंशोऽध्यायः

## द्वाविंशोऽध्यायः ॥२२॥

मार्कण्डेय उवाच— एवं विषीदमानस्य तस्य राज्ञः पुरोहि सः। तदङ्गनिगलद्वक्त्रवारिलेशो विनिःश्वसन्॥ ब्रूहि मूल्यं कियत्तेऽङ्ग किं विचारेण तेऽधुना। तावत्तेऽहं प्रदास्यामि संदेहो भविता न ते॥ हरिश्चन्द्र उवाच— नहि चण्डाल संदेहो विद्यते मम भूतले। वेदशास्त्रपुराणेषु वेदांगेषु च सर्वशः॥ कश्चिद्दातास्ति सन्देहो मम विक्रयकर्मणि। *ब्राह्मणक्षत्रविट्शूद्रे यो वा को वा नरो भुवि॥ मूल्येन भविता क्रेता इति मे निश्चिता मतिः। उत्तमेषूत्तमा लोके क्रयविक्रयकारिणः॥५॥ चण्डाल उवाच— एवं विविच्य भवता किं न प्रोक्तं त्वयाऽनघ। ब्राह्मणः क्षत्रियो वैश्यः शूद्रः क्रीणातु मामिति॥ अनिर्दिश्य त्वयोक्तं हि पुमान् विक्रीयते मया। मया तदैव क्रीतोऽसि यदि त्वं सत्यसंगरः॥ द्विर्भाषसे यदि वचः तर्हि त्वं भ्रश्यसेऽनृतात्। अन्यथैव वदन्तिस्म मादृशाः पुरुषाधमाः॥ त्वादृशाः पुरुषा लोके सततं सत्यवादिनः। यदि सत्यं प्रमाणं ते विक्रीतो हि मया भवान्॥ अहं क्रेता न सन्देहो गृहाण धनमात्मनः। इतोपि कष्टास्वापत्सु नात्याक्षीः सत्यमुत्तमम् ॥१०॥ सत्यान्नास्ति परो मोक्षो ह्यनृतान्नास्ति पातकम्। सत्ये प्रतिष्ठितं सर्वं जगदेतच्चराचरं॥ असत्यान्नश्यते सर्वं ब्रह्मादिमशकान्तकम्। आत्मना जायते जन्तुरात्मना म्रियते पुनः॥ अन्यस्य मरणेनान्यो न म्रियेत कदाचन। पापेनान्यस्य नान्यो यः पापीयान्भवति ध्रुवं॥ सत्यात्स्वर्गमवाप्नोति मृषावादात्पतत्यधः। यदाऽसत्यं वदेन्मर्त्यः तदा सत्यं परित्यजेत्॥ हरिश्चन्द्र उवाच— यदि शक्नोषि विप्रेन्द्रं कौशिकं

मुनिसत्तमम्। परितोषयितुं द्रव्यैः भृत्यस्ते भवितास्म्यहम् ॥१५॥ बहुस्वर्णाभिधो यज्ञः स निर्वर्तेत यावता। विश्वामित्रस्य भद्रं ते तावद्देहि धनं मम ॥ चण्डाल उवाच— अहं यज्ञं न जानामि द्रव्यसंख्यां कदाचन। न तुष्यात्कौशिको विप्रस्तुष्याद्वा धनकामुकः ॥ एतावद्दीयते[129] तुभ्यं मया गाधिसुतार्थे ते। श्रृणुष्व दीयमानं मे त्वदर्थं द्रव्यमस्तु ते ॥ दशयोजनविस्तीर्णमण्डलं पृथिवीतले। सुवर्णमुक्तारत्नौघैरेकयोजनमुन्नतम्। राशीकृत्य प्रदास्यामि विश्वामित्राय धीमते ॥ मार्कण्डेय उवाच— एवमुक्त्वा ततो राजन् चण्डालो वीरबाहुकः। रत्नौघराशिमकरोदात्मप्रोक्तप्रमाणतः ॥२०॥ तं रत्नराशि विश्राण्य[130] हरिश्चन्द्राय भूभुजे। एतावद्धि मया शक्यं दातुं द्रव्यं महीतले॥ इतः परं न मे शक्तिः दातुं यत्तव रोचते। इत्थमुक्त्वा स चण्डालो दास आगच्छ[131] मामिति ॥ अथान्तरिक्षादायातो नक्षत्रः प्रीतमानसः। गृहीत्वा तद्धनं सर्वं प्रीतिमानभवत्पुनः ॥ दृष्ट्वा सेन्द्रास्सुराः सर्वे धनराशि समुन्नतम्। नासाग्रन्यस्ततर्जन्यो बह्वाश्चर्यं प्रपेदिरे ॥ मुमुचुः पुष्पवृष्टिं ते राजन् चण्डालमूर्धनि। साधुवादान् वाचयन्तो देववाद्यान्यवादयन् ॥२५॥ अथ सर्वगतो वायुः खस्थो[132]वाच नृपोत्तमम्। अनृणोऽसि महाराज दत्ता सा दक्षिणा त्वया ॥ अथान्तरिक्षात्सहसा प्रादुरासीन्महीशितुः। अनिर्दिष्टवयोरूपवेषाकारस्वरूपवान् ॥ उवाच भूपमालोक्य महाविस्मयविस्मितम्। चण्डालमेव पश्यन्तं हर्षनिर्भरचेतसा ॥ पुलकांचितसर्वाङ्गमुत्फुल्लाम्बुजलोचनम्। कोऽयं विष्णुः शिवो ब्रह्मा धर्मोवेन्द्रश्शचीपतिः ॥ मद्वंशस्य निदानं वा घृणिरेष सनातनः। सौरैर्हैरण्यमंत्रैश्च मया संप्रीणितोऽपि वा ॥३०॥ हिरण्यरेता देवास्यो भक्तार्तिप्रविभंजनः। चण्डालमितिपश्यन्तं विश्वामित्रः प्रतापवान् ॥ विश्वामित्र उवाच— [133]ममेयं दक्षिणा दत्ता त्वदुक्ता सत्यसंगर। कुरुष्व मे प्रियं चान्येन तुष्टो भवाम्यहम् ॥ मयि तुष्टे जगत्यास्मिन् दुर्लभं ते न विद्यते।

शक्तोऽहं ब्रह्मणो लोकं त्वां प्रापयितुमञ्जसा ॥ कैलासं चैव वैकुण्ठं मोक्षं वा प्रापयाम्यहम् । इदं धनमिदं राज्यं पत्नी चाप्रतिमां तव ॥ कोशं बलं च दुर्गं च सप्तद्वीपां ससागराम् । पृथिवी च सुते मह्यं एते च विजयाजये ॥३५॥ प्रतिगृह्णीष्व भद्रं ते ह्यायत्यामुत्तमां गतिम् । मोक्तास्म्यसत्यदोषात्त्वां प्रापयामि विधेर्गृहम् ॥ अशक्तं वापि शक्तं वा त्रिशंको पश्य मां भवान् । प्रतिसृष्टिविधानेन ब्रह्मणः परमेष्ठिनः॥ हरिश्चन्द्र उवाच— यदत्र भवता प्रोक्तं न मे श्रोत्रपथं गतम् । इतोपि यत्तवाभीष्टं तद्दास्याम्यहमञ्जसा ॥ चण्डालगमनात्पूर्वं वद शीघ्रं मुनीश्वर । भूताक्रान्तस्त्रिदोषी च पित्तोद्रेकी पुनःपुनः ॥ अनुभूतमसद्वाक्यमपद्धं बहु भाषते । एतेषु कोभवानद्य नमस्तेऽस्तु मुनीश्वर ॥४०॥ मार्कण्डेय उवाच— एवमुक्तोऽवनीशेन निराशः कुशिकात्मजः । दिवं जगाम योगेन महाकोपो नृपोत्तमे ॥ तस्मिन्गते हरिश्चन्द्रः चण्डालं प्रत्यभाषत । विनयावनतो भूत्वा कृताञ्जलिपरिग्रहः॥ हरिश्चन्द्र उवाच— त्वं मे माता पिता चैव त्वं गतिस्त्वगतेर्मम । त्वं बन्धुस्त्वं सुहृच्चैव त्वं मित्रं त्वं परायणम् ॥ यस्त्वया मोचितस्त्वद्य ऋणादस्माद्भयंकरात् । किं करोमि महाबाहो शुश्रूषां वचनात्तव ॥ सर्वं तेऽहं करिष्यामि यद्यपि स्यात्सुदुष्करम् । यत्किंचिद्वचनं तुभ्यं मल्ललाटलिपिर्यतः । तदद्याऽऽदिश मां तात त्वदुक्तं करवाण्यहम् ॥४५॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने द्वाविंशोऽध्यायः॥

## त्रयोविंशोऽध्यायः ॥२३॥

मार्कण्डेय उवाच— ततो गृहीत्वा राजानं चण्डालस्सोऽनयद्गृहम् । सकाशमुपविश्यास्य राज्ञोत्संगे प्रसार्य च ॥ चरणौ मर्दयस्वेति सोऽब्रवीद्धर्मनन्दन । दृष्ट्वा प्रसारितौ पादौ चण्डालेन दुरात्मना ॥ मूर्च्छितस्सहसा राजा पपात धरणीतले । स मुहूर्ताद्विनिश्वस्य प्राणान्सन्धाय चात्मनि ॥ अहो विधे कुतो*हंसि मामेवं

निर्घृणो भवान् । इतोपि मे कियद्बाधां करिष्यसि न वेद्म्यहम् ॥ परिदूयात्मनीत्थं च चण्डालं प्रत्यभाषत । शुष्यत्कण्ठोष्ठताल्वास्य स्स्विन्नगात्रस्सवेपथुः ॥५॥ अत्ययुक्तमिदं मन्ये मम कर्तुं कदाचन । यस्मिन् कर्मणि यः प्राप्तस्तस्मिंस्तद्योजनं वरं ॥ न योजयेच्छिरो- रत्नं पादयोर्नूपुरं च यत् । न योजयेदुत्तमाङ्गे यत्र यद्योग्यमेव हि । तत्र तद्योजयेत्कर्ता विपरीतं न कारयेत् ॥ सत्यकीर्तिरुवाच— अहं प्रेष्यश्च दासश्च नियोज्योऽहं महद्यशः । न च मन्युस्त्वया कार्यो दैवं प्रति नराधिप ॥ सुखदुःखानि लोकेऽस्मिन्भवन्ति महता- मपि । ब्रह्मादीनां महाराज दुर्लङ्घ्या भवति व्यथा ॥ अहं संवाहयाम्यद्य वीरबाहोः पदद्वयम् । राजन्नपसरान्यत्र भृत्योऽहं भूपते तव ॥१०॥ एवमुक्तो महाराजो बाष्पपर्याकुलेक्षणः । उवाच वचनं धीमान् मन्त्रिणं मन्त्रिणां वरम् ॥ मा मां स्पृश महामन्त्रिन् चण्डालत्वमुपागतम् । असंभाष्यमसंस्पृश्यमकीर्त्यं सर्वदा नरैः ॥ सत्यकीर्तिरुवाच— आपत्सु रक्षितश्चैव भवता तव भार्यया । लोहि- ताश्चातिप्रियतरो राजंस्ते वस्त्रभोजनैः ॥ न विस्मृता महायज्ञो महा- दानो महोत्सवः । भीताभयमहादानस्तवहस्ता हि नित्यशः ॥ स्वर्गे वा नरके वापि पाताले भूर्भुवादिषु । या ते गतिर्महीपाल तां भजि- ष्यामि नेतराम् ॥१५॥ चण्डालो भव पापो वा ब्रह्महा वापि कोऽपि वा । यादृशो हि भवानद्य तादृशोऽहं न संशयः ॥ हरिश्चन्द्र उवाच— नात्र तिष्ठति पत्नीच न सुतो न च बान्धवाः । अनुरक्तश्शुचिर्दक्षः सन्मन्त्रिस्त्वं यथाऽसि मे ॥ मार्कण्डेय उवाच— एतस्मिन्नन्तरे- क्रुद्धो वीरबाहुस्सुदारुणः । अब्रवीत्परमं घोरं स्वजातिसदृशं वचः॥ रे रे धिक्त्वां मृषावादिन् पुरुषाधम निस्त्रप । त्वया जातेन दुष्टेन नष्टं ते तु कुलं शुभम् ॥ धनं मदीयमाच्छिद्य सप्तजन्मसु चार्जितम् । दत्वा स्वगुरवे सर्वं मदुक्तं न करोषि किम् ॥२०॥ कार्यं त्वदुक्तं वचसा सामान्येन करोम्यहम् । दुष्करं गर्हितमिति विशेषस्त्वधु-

नोच्यते ॥ दासेन सर्वं कर्तव्यं स्वाम्याज्ञावशवर्तिना । मुख्या-मुख्यं न वक्तव्यं युक्तायुक्तं तथैव च ॥ हीनकार्यमहीनं वा दासः कुर्यादलोलुपः । पादसंवाहनं वापि शकृदुत्सारणं तथा ॥ उच्छिष्टो-त्सारणं चैव यत्किचान्यच्च नित्यशः । क्रेता स्वामी धनं दत्वा यत्किं-चिच्चोदयत्यसौ ॥ तन्निश्शंकेन कर्तव्यं दासेनाऽधर्मभीरुणा । यत्किंचिदपि यः कुर्यात्स्वामिकार्यमकुत्सितः ॥२५॥ सोऽन्यजन्मनि राजास्यात्सार्वभौमो महायशाः । ब्राह्मणः क्षत्रियो वापि वैश्यःशू-द्रोऽपि वेतरः ॥ निषादः पुल्कसो वापि चण्डालोऽपि ततोऽधमः । एवंविधस्य यो यस्य दासत्वं प्राप्नुयान्नरः ॥ मानयेत्स च तं भक्त्या भावयेत्पितरं गुरुम् । मानयन् मर्दयस्वाद्य चरणौ मे नरा-धम ॥ यदि सत्यं प्रमाण ते सत्ये वचसि तिष्ठसि । सदा त्वं सत्य-सन्धश्चेत्सत्यमेव समाचर ॥ पशवःपक्षिणश्चैव चण्डालाश्चाधमाधमाः। वर्तन्ते सत्यवचसि कि तेभ्योप्यधमो भवान् ॥३०॥ सत्यकीर्ति-रुवाच— अन्यत्सर्वं हि सुलभं सत्यमेकं न लभ्यते । तत्पादौ मर्दय-स्वाद्य भवतोऽयं पिता गुरुः ॥ जनिता चोपनीता च यस्तु विद्यां प्रय-च्छति । अन्नदाता भयात्त्राता मूल्यक्रेता विशेषतः॥ षडेते पितरःप्रो-क्ताः धर्मशास्त्रविनिश्चयात् । नोचेदहं मर्दयामि त्वदर्थं त्वम *पासर । भृत्योऽस्मि तव दासश्च विनियोज्यश्च सर्वदा ॥ मार्कण्डेय उवाच— मन्त्रिणैवं त्वभिहितो धीरोऽसौ धर्मनन्दन । स्थित्वा तत्पुर उत्तस्थौ गृहीतुं पादमादरात् ॥ चण्डालस्सोपि धर्मात्मा पादावा-च्छिद्य राजतः । उक्त्वा सुमर्दितमिति पुनराह नृपोत्तमम् ॥३५॥ वीरबाहुरुवाच— इमां मे घर्घरीं गृह्य वादयन् लगुडेन च । अनुसि-न्ध्वनुवीथि त्वं ह्यन्वापणमनुव्रजम् ॥ अनुचैत्यं चानुपथमनुदेवाल-यान्तिकम् । वीरबाहोरहं दासस्सत्य(वादी)चारीति नामतः ॥ श्मशानभूमिपालोऽहमिति सर्वां च तां पुरीम् । उच्चैरुद्घोष्य पश्चात्त्वं श्मशाने निवसानिशम् ॥ योजनत्रयविस्तारे पंचयोजनमायते।

क्षेत्रमूल्यं प्रेतवस्त्रं पालकद्रव्यमेव च ॥ सर्वाण्येतानि मे द्रव्यं मदन्तिकमुपानय। प्रेतास्यतण्डुलं नित्यं यावत्तावच्च विद्यते ॥४०॥ तत्सर्वं तव भक्ष्यं स्याद्देदत्ते निर्मितं मया। ब्राह्मणाद्यास्त्वधर्मस्थाः ब्राह्मण्याद्यास्त्रियस्तथा ॥ यथापराधं दण्ड्यास्स्युस्त्वया मम नियोगतः। ये याश्च वध्या वध्यास्स्युस्त्वया निश्शङ्कमेवच ॥ मा विनाशय मद्द्रव्यं ममाज्ञां न निवर्तय। निष्कृतिः सर्वपापानां विद्यते स्मृतिचोदिता ॥ स्वामिद्रव्यविनाशस्य स्वामिद्रोहकृतश्च हि। मित्रद्रोहकृतश्चापि तथा विश्वासघातिनः ॥ गुरुद्रोहकृतश्चापि निष्कृतिर्नेह विद्यते। गच्छ धर्मे प्रवर्तस्व सत्ये वर्तस्व नित्यशः। समार्जय शुभान्लोकान्यथेच्छसि तथाकुरु ॥ मार्कण्डेय उवाच-- श्मशानाभिमुखो राज्ञा नियुक्तो वीरबाहुना। कृत्वा यथोक्तं तेनैव नगर्यां सर्वतो नृपः ॥४६॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने त्रयोविंशोऽध्यायः

## चतुर्विंशोऽध्यायः ॥२४॥

युधिष्ठिर उवाच— श्मशाने निवसन्राजा सप्तद्वीपाधिपाधिपः। कि कुर्वन्कालमनयत् किं चकार द्विजोत्तम ॥ हरिश्चन्द्रस्य राजर्षेः पुण्यश्लोकस्य धीमतः। कथाश्रवणविच्छित्तौ दूयते च मनो मम ॥ तनूनपात्समीपस्थनवनीतवदच्युत। श्रोतुं न नीयते शोकाच्छ्रवणेच्छा प्रवर्तते ॥ कथां श्रावय मां विप्र पुण्यश्लोकस्य पुण्यदाम्। शृणोमि सावधानोऽहं सावधानमना भवान् ॥ मार्कण्डेय उवाच-- शृणु राजन्नघहरां जगत्प्राणसखीं शुभाम्। कौशिकीद्धाभिसंवृद्धां हरिश्चन्द्राद्रिसंभवाम् ॥५॥ दुःखशोकापहां राजन् शीलद्रुमविवाहिनीम्। करुणारसकल्लोलां श्रोतृचित्तमहोडुपाम् ॥ श्रोतृपापाब्धिसंतारवीरबाहुसुनाविकाम्। यत्कथा क्षीरवाराशिश्चन्द्रमत्यब्जसंभवा ॥ हरिश्चन्द्रकथानद्यां राजन् सुस्नाहि चेतसा। अघदावानलज्वालातप्तवर्षाम्बुदां शुभाम् ॥ पापाहिविषसंदष्टविषनाशगरुत्मतीम्। श्रोत्राभ्यां पिब राजेन्द्र त्रिशंकुजकथां शुभाम् ॥

चण्डालाज्ञां तथाकुर्वन् सत्यधर्माश्रयो नृपः। श्मशानमभितो वीक्ष्य परिक्रम्य सुदारुणम् ॥१०॥ कृत्वैव तत्र कुटिकां तत्रास्ते मन्त्रिणा सह। रौद्रं श्मशानमालोक्य स राजा धर्मनन्दन॥ अब्रवीन्मन्त्रिणं वाक्यं मधुरं धर्मसंहितम्। धर्माधर्मकरं नृणां विद्यते हि शुभाशुभम् ॥ धर्मेण सुखिनस्तस्माद्धर्ममेव समाचरेत्। पापेन दुःखिनस्तस्मान्नपापं कर्तुमर्हसि॥ स्वकृतं भुज्यते मर्त्यैः सुकृतं दुष्कृतं च वा। धर्मकृद्गर्भवासेऽपि सुखेनास्ते सुनिर्वृतः॥ तस्मिन्वसति पापात्मा नरः पापी सुदुःखितः। दृष्ट्वैवेहोभयं मर्त्यस्सदा धर्मं समाचरेत् ॥१५॥ अधर्मरुचयः पापाः शूलप्रोतास्समन्ततः। छिद्यन्ते क्रकचेनान्ये द्विधा पापपरायणाः॥ पादयोः पाशसंबद्धाः प्रलंबंते (पतंति)ह्यधोमुखाः। प्रदह्यन्तेऽग्निना चान्ये पीड्यन्ते दारुयन्त्रकैः॥ कालसूत्रेण संबध्य दारुवत्पाट्यते जनः। धर्मिभिः पापिनस्सर्वे क्लिश्यन्ते वृत्तहेतुतः॥ धर्मिणः पापिनस्सर्वे सुखयन्ति परस्परम्। [१४४]वहन्ति वाहयन्तिस्म पापपुण्यवशादिह॥ तस्मान्मन्त्रिन्सदा मर्त्यः स्वशक्त्या धर्ममाचरेत्। यो जातो भारतेवर्षे ज्ञानेन्द्रियशरीरवान् ॥२०॥ वाक्पाणिपादचक्षुष्मान् न नरो धर्म[१४५]माचरेत्। बुद्धिमानपि शास्त्रज्ञः सर्वावयववानपि। संमूढः सर्वकार्येषु पश्चात्तपति दुर्मतिः॥ सत्यकीर्तिरुवाच— यस्त्वया श्लाघ्यते धर्मो यस्ते धर्मःपरो मतः। लक्षणं तस्य धर्मस्य ब्रूहि मे धर्मसंग्रहम्॥ हरिश्चन्द्र उवाच— हन्त ते कथयिष्यामि धर्मलक्षणमादितः। यच्छ्रुत्वा मुच्यते जन्तुर्महद्भिरपि पातकैः॥ इयं दुर्वसतिस्[१४६]तस्मादुःखशोकप्रणाशिनी। आवयोर्भीषणाकारे श्मशाने मन्त्रिसत्तम॥ अहिंसा सत्यमस्तेयो ब्रह्मचर्यमकल्मषं। अक्रोधो गुरुशुश्रूषा दानं संतोष आर्जवं। एवं दशात्मको धर्मः कथितो ब्रह्मणा पुरा ॥२५॥ सत्यकीर्तिरुवाच— अहिसा कीदृशी प्रोक्ता कीदृशं सत्यलक्षणम्। अस्तेयं कीदृशं प्रोक्तं ब्रह्मचर्यं च कीदृशं॥ अकल्मषं कथं प्रोक्त-

मक्रोधः कीदृशस्स्मृतः। कीदृशी गुरुशुश्रूषा किं दानं सर्वपुण्यदम्॥ सन्तोषः को नृपश्रेष्ठ किमार्जवमुदाहृतम्। दशैतानि नृपश्रेष्ठ वद लक्षणतः पृथक्। धर्मलक्षणविज्ञाने त्वादृशोऽन्यो न विद्यते ॥ हरिश्चन्द्र उवाच- अहिंसां संप्रवक्ष्यामि शृणुष्वैकमनाः शुभाम्। यां श्रुत्वा ब्रह्महा शुद्ध्येत्सर्वधर्मसमाश्रयाम्॥ आत्मवत्सर्वभूतानां सुखप्राप्तिं विचिन्तयेत्। वाचापि कथयेद्यस्तु कर्मणा कुरुते सदा॥३०॥ कर्मणा मनसा वाचा परेषां न समाचरेत्। मर्मच्छेदकरं दुःखं सोऽहिंसक उदाहृतः॥ यज्ञार्थं चोदिता हिंसा सा हिंसा न प्रकीर्तिता। मधुपर्केऽपि या हिंसा ह्यहिंसा सा * कलिं विना॥ चतुर्विधानि भूतानि पुरा सृष्ट्वा प्रजापतिः। स यज्ञे तानि सर्वाणि देवार्थं विनियुक्तवान्॥ अतो मन्त्रिन्नहिंसा सा या यज्ञे श्रुतिचोदिता। आत्मार्थं पशुहिंसा च तमसोद्रिक्तया धिया॥ प्राणिहिंसा समुद्दिष्टा हिंसा सा दुःखदायिनी। अहिंसायां च हिसायां प्रमाणं श्रुतिचोदना॥३५॥ यत्र प्रीतिः प्रवृत्तास्यात्प्राणिहिंसासमन्विते। यदि शास्त्रं न तत्रास्ति तत्कर्ता याति रौरवं॥ अहिंसानिरतो नित्यं यो वा को वा महीतले। यज्ञदानतपस्तीर्थफलं सर्वं समश्नुते॥ सत्यं तेऽहं प्रवक्ष्यामि सलक्षणमिदं शृणु। सत्यस्य लक्षणं गुह्यं दुर्ज्ञेयं सर्वमानवैः॥ सत्यं ब्रूयात्प्रियं ब्रूयान्नब्रूयात्सत्यमाप्रियं। प्रियं च नानृतं ब्रूयादेतत्सत्यस्य लक्षणं॥ सर्वभूतहितं प्रोक्तं वचनं सत्यमिष्यते। परप्राण्युपकाराय वचनं सत्यमुच्यते॥४०॥ कीटकभ्रमरन्यायाच्छिष्यं यो योजयेद्गुरुः। वेदैर्वेदान्तवाक्यैश्च तत्सत्यमितरन्मृषा॥ सर्वस्वहरणे प्राप्ते साधूनां गुणशालिनाम्। येनानृतेन तच्छाम्येत्तत्सत्यमनृतं भवेत्॥ सत्येन स्वर्गमाप्नोति सत्येन निरयं व्रजेत्। अनृतात्स्वर्गमाप्नोति निरयं त्वनृताद्भवेत्॥ लोकमुद्वेजयेद्योवै पिशुनो लोकदूषकः। लोकापवादचतुरः परहिंसापरायणः॥ लोलुपः कामुकः क्रूरो लुण्ठको ग्रामदूषकः। ग्रामद्रव्यापहारी च

परदारपरायणः ॥४५॥ स्वधर्मदूषकश्चैव परधर्मप्रसेवकः। एव-मादिदुराचारो मर्त्यः सर्वत्र सर्वदा ॥ विपद्गते मन्त्रिवर्य सर्वस्व-हरणेन च। तत्प्राणपरिरक्षार्थं सत्यासत्यं वचो वदेत् ॥ इत्ययं पाक्षिको धर्मः परमार्थमिदं शृणु। सर्वप्राण्युपकारार्थं हितमेव सदा वदेत् ॥ अस्तेयं ते प्रवक्ष्यामि सर्वधर्मोत्तमोत्तमम्। अस्तेनान्न-परो धर्मः न स्तेनात्पातकं परम् ॥ कर्मणा मनसा वाचा बलेन छद्मनापि वा। कापट्येन च शाठ्येन परोक्षेणापि मानवः ।५०॥ तृणं काष्ठं फलं मूलं सुवर्णं रजतं तथा। वस्त्रकम्बलधान्यानि लोहानि त्रपुसीसकम् ॥ एतानि यानि चान्यानि निचयानि न यो हरेत्। स निर्मलो मनुष्येषु ज्योतिष्ष्विव दिवाकरः ॥ अस्तेयं पुरुषं मन्त्रिन्सर्वसंतोषसंयुतम्। कोशागारे च शुद्धान्ते सर्वत्र विनियो-जयेत् ॥ मनश्चोरश्च वाक्चोरः कर्मचोरस्तृतीयकः। यस्मिन्न सन्ति पुरुषे सोऽस्तेयो भुवि दुर्लभः ॥ सर्वद्रव्यापहर्तॄणां निष्कृतिर्विद्यते नृणाम्। आत्मापहारिणां क्वापि निष्कृतिर्नोपपद्यते ॥५५॥ अन्यथा सन्तमात्मानमन्यथा सत्सु भाषते। किं तेन न कृतं पापं चोरेणा-त्मापहारिणा ॥ तं दृष्ट्वा धर्मराजस्य वेपथुर्जायते भृशम्। आत्माप-हारिणो मन्त्रिन् एकविंशतिकोटयः ॥ निवसन्ति ब्रह्मकल्पं नरकेषु महत्सु च। साधारणोऽयं सर्वेषां धर्मो ह्यस्तेयलक्षणः ॥ यज्ञैर्यष्टु-मशक्तानां दरिद्राणां विशेषतः। ब्रह्मचर्यमहं वक्ष्ये ब्रह्मलोकसुख-प्रदम् ॥ चतुर्णामाश्रमाणां च ब्रह्मचर्यं महत्तपः। स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥६०॥ सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृ-त्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ एतन्मैथुन-मष्टाङ्गं चतुर्णां वर्ज्यमुच्यते। स्वदारेषु गृहस्थस्य नहि दोषाय कल्पते ॥ तच्च चेत्परदारेषु गृहस्थस्याघ उच्यते। अष्टम्यां च नवम्यां च पञ्चम्यां निजजन्मभे ॥ विषुवायनयुग्मेषु मन्वादिषु युगादिषु। व्रतोपवासश्राद्धेषु सोमसूर्यग्रहेषु च ॥ सन्ध्ययोश्च दिवा चैव न कुर्या-

न्मैथुनं गृही । प्राग्रजोदर्शनाद्भार्यां गर्भिणीं मलवाससम् ॥६५॥ गतार्तवां वयोतीतां गृही गच्छन्पतत्यधः । अकल्मषं प्रवक्ष्यामि सर्वकल्मषनाशनम् ॥ डाम्भिकं कल्मषं प्राहुस्तदभावो ह्यकल्मषम् । सदम्भो द्विविधःप्रोक्तः परोक्षः साक्षिकस्तथा ॥ *आचारधर्मविनयः परोक्षःसोऽभिधीयते । सत्कारमानपूजार्थं स्तुत्यर्थं यस्समाचरेत् ॥ सदाचारं समीक्षेत साक्षीदम्भः स उच्यते । उभावेतावभोज्यान्नौ नामधारकसंज्ञकौ ॥ बिडालबकवृत्तांश्च शिष्टाचारान्तकारिणः । निशाचरसधर्मांश्च वाङ्मात्रेणापि नाऽर्चयेत् ॥७०॥ यथाऽऽदरेण प्रत्यक्षमाचारमनुवर्तते । परोक्षेण तथाकुर्याददम्भः सोऽभिधीयते ॥ यथा न ज्ञायते लोकैस्सदाचारो ह्ययं पुमान् । सर्वकर्मणि यो विप्रो ममाहङ्कारवर्जितः ॥ जडो मूकश्च मूर्खश्च दुराचारो ह्ययं तथा । निन्द्यमानो जनैर्विप्रः सदाचारे प्रवर्तते ॥ स्तोत्रेण खिद्यते धर्मी मानान्मरणमिच्छति । अवमानात्तपोवृद्धिरवमानादघक्षयः ॥ सत्कारमानपूजाभिर्वर्धते डांभिको गुणः । एतैस्ततो विनश्येत ततो यात्यधमां गतिम् ॥७५॥ धर्मलिङ्गी नरो नस्यादलिंगी धर्ममाचरेत् । अग्नीनाधाय विधिवदिष्ट्वा यस्सौमिकैर्मखैः ॥ विहायतांश्च यस्तिष्ठेन्नामधारः स उच्यते । अस्पृश्यो यमसंभाष्यो ह्यभोज्यान्नः सदा द्विजैः ॥ सदम्भःकल्मषो मन्त्रिन्नदम्भस्यादकल्मषः । अक्रोधः श्रूयते मन्त्रिन् सर्वधर्मप्रवर्धकः ॥ धर्मनाशकरःक्रोधो ह्यथाऽधर्मकरोऽपि च । अक्रोधेनैव जायेत ब्रह्मलोकस्सनातनः ॥ अक्रोधनाः क्षमासाराः तरन्ति भववारिधिम् । आक्रुष्टस्ताडितोवापि सत्कृतो धिक्कृतोऽपि वा ॥८०॥ निन्दितः कुत्सितोवापि बलवान्साधुसंमतः । सर्वज्ञो लोकमान्यश्च दुर्बलेन नरेण यः ॥ न क्रुद्ध्येत्क्षमते सर्वं हर्षगद्गदमानसः । स एव साक्षाल्लक्ष्मीशः सभूमिस्सदिवाकरः ॥ तेनेदं ध्रियते सर्वं क्षमया शमशालिना । यश्च क्रुध्येच्च पुरुषः स याति नरकान् बहून् ॥ क्रोधस्वामी नरो याति लोकान् सन्ततिकान् शुभान् । सत्सु क्रोधविरामेषु निहन्ति क्रोधमुत्थितम् ॥

यस्सयाति हरेर्मन्त्रिन्सायुज्यं नात्र संशयः। श्रुतिस्मृत्युदिताचारैस्तपोयज्ञव्रताध्वरैः ॥८५॥ वेदस्वाध्यायदानैश्च चिरकालोपसञ्चितम्। धर्मराशिं क्षणात्क्रोधो निर्दहेत्तूलराशिवत्॥ चण्डालमिव तं क्रोधं द्विजवन्मनुजोत्तमः। यस्त्यजेद्दूरतः क्रोधं श्रुतवान् सोऽच्युतो भवेत्॥ तुल्येन क्रोधितस्तुल्यः क्षान्तो मध्यम उच्यते। सुदुर्बलो बलवता क्षान्तस्सोधम उच्यते। क्षान्त्या शुद्ध्यन्ति विद्वांसो दानेनाकार्यकारिणः॥ यज्ञदानतपोयोगैः सर्वैः शुद्ध्यन्ति वै द्विजाः। श्रूयतां गुरुशुश्रूषा ब्रह्मसायुज्यदायिनी॥ सर्वज्ञत्वप्रदा चेह सर्वविज्ञानदायिनी। शुश्रूषायै गुरोर्देहमर्थं तज्जीवनाय च ॥९०॥ तत्प्राणपरिरक्षार्थं प्राणान् तस्मै निवेदयेत्। शुश्रूषेत गुरुं शिष्यो दिवारात्रमतन्द्रितः॥ त्यक्तदेहाद्यहङ्कारो विनिद्रो विगतस्पृहः। विक्षुत्तृष्णाप्रमादश्च ध्यायन्नात्माधिदैवतम्॥ कुर्वन्नकृत्रिमां भक्तिं निश्चलां विजितेन्द्रियः। एवं कुर्वन्गुरोःशिष्यः शुश्रूषामन्वहं वशी॥ वेदवेदाङ्गशास्त्राणां भाजनं स्यादनुग्रहात्। ब्रह्मलोकमवाप्यान्ते ब्रह्मणा सह युज्यते॥ शुश्रूषैवं गुरोर्मन्त्रिन् सुप्रोक्ता भवते मया। शौचं सलक्षणं वक्ष्ये सर्वधर्मसमाश्रयम् ॥९५॥ द्विविधं प्रोच्यते सद्भिः शौचं मूलं द्विजन्मनाम्। शौचाचारविहीनस्य कुतोऽनुष्ठानसौष्ठवम्॥ अधिष्ठानं विना वृक्षा वर्तंते नहि कुत्रचित्। बाह्यशौचं मृज्जलाभ्यां श्रुतिप्रोक्तप्रमाणतः॥ शिष्टाचारविधानेन शौचं कुर्यात्प्रयत्नतः। शौचे यत्नःसदा कार्यो निस्तन्द्रेण द्विजन्मना॥ गन्धलेपक्षयकरं कुर्याच्छौचं प्रयत्नतः। मानसं विष्णुचिन्तास्यात्कामादिमलनाशनम्॥ सर्वत्र मैत्री करुणा निंदितोपेक्षया सह। मौनं च भावसंशुद्धिरन्तःशुद्धिं प्रचक्षते ॥१००॥ शौचाचारवतां मन्त्रिन् भवन्ति सफलाः क्रियाः। संतोषं तेऽभिधास्यामि भूषणं जगतामपि॥ असंतोषःपरं दुःखं सन्तोषः परमं सुखम्। आशासक्तिरसंतोषः संतोषस्स्यान्निराशता॥ सन्तोषामृततृप्तस्य यत्सुखं शांतचेतसः। तत्सुखं धनलुब्धस्य नेतश्चेतश्च धावतः॥ यदृच्छयो

पपन्नेन वृत्तिर्यायेन केनचित् । तथैव याऽतिसंतृप्तिस्सतु सन्तोष उच्यते ॥ संतोषैश्वर्यतुष्टानां जगत्सर्वं तृणायते । निस्स्पृहस्यैव विप्रस्य कुबेरोऽपि तृणायते ॥१०५॥ यः प्रतप्येद्द्रव्यलाभे संतुष्येत्तदलाभतः । सन्तोषलक्षणं ह्येतदसन्तोषस्ततोऽन्यथा ॥ आर्जवं परमो धर्मो ब्रह्मणा परिगीयते । आर्जवे वर्तमानो यः स शुद्धो योनिबीजतः ॥ सदैककरणं यस्य सदैकवचनं शुभम् । सदैकचित्तो मेधावी ऋजुवाक्कायमानसः ॥ आर्जवं परमं ह्येतत्सर्वधर्मेष्वनुत्तमम् । अहिंसाद्या आर्जवान्ताः दशधर्मास्सलक्षणाः ॥ प्रोक्ता मया मन्त्रिवर्य यथाज्ञाता यथामति । मार्कण्डेय उवाच— इत्थं तत्र हरिश्चन्द्रो मन्त्रिणा सह[123] भूपते ॥११०॥ श्मशानेऽकथयत्पुण्यां कथां धर्मार्थसंयुताम् । आचारान् दण्डनीतीश्च चतुर्वर्गकथां शुभाम् ॥ वर्णाश्रमाणां सर्वेषां पृथगाचारलक्षणम् । चतुर्णां चाथ वर्णानां धर्मांश्चैव पृथक् पृथक् ॥ श्मशानपालने चैव स्वामिकार्ये परोऽभवत् । तस्येत्थं वर्तमानस्य राज्ञस्तस्य महात्मनः ॥ चन्द्रवत्यास्सपुत्रायाः वसन्त्याश्च द्विजालये । व्यतीयुर्द्वादशाब्दाश्च दुःखेन वसतां नृप ॥ अन्योन्यस्पर्धया राजन् विश्वामित्रवसिष्ठयोः । अन्वभूत्सुमहद्दुःखं सराजा पाण्डुनन्दन ॥११५॥ स्वर्णदीवालुकाश्शक्याः वर्षधारास्सहस्रशः । वियद्गतास्तारकाश्च संख्यातुं राजसत्तम ॥ तस्येयं महती जाता विपत् * काले दुरत्यया । हरिश्चन्द्रस्य यद्दुखं तदन्येषां न विद्यते ॥११७॥

इतिश्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने चतुर्विंशोऽध्यायः ॥

## पञ्चविंशोऽध्यायः ॥२५॥

युधिष्ठिर उवाच— पतिव्रता महाभागा चन्द्रवत्यसितेक्षणा । विक्रीता राजसिंहेन किं कुर्वंत्यनयत्समाः ॥ सुजातस्सुखसंवृद्धो लोहिताश्वोऽतिसुन्दरः । कथं कालमनैषीत्स निवसन्कालकौशिके । लोहिताश्वकुमारस्य सुकुमारस्य[124] वर्तनम् ॥ मार्कण्डेय उवाच— शृणु राजन् चन्द्रवत्यास्सपुत्रायाः प्रवर्तनम् । दिवारात्रमतन्द्रायाः काल-

कौशिकवेश्मनि। पशुपालस्त्वटव्यांतु दिवारात्रमभोजनम्। कन्दमूल फलाहारो दिष्टमेवानुचिन्तयन्॥ पितरं मातरं चैव संस्मरन्मनसा सदा। पादसंवाहनं कुर्वन्नुच्छिष्टापनयं तथा॥५॥ यच्च किंचित्तदुक्तं तु मलिनाम्बरखण्डधृक्। समिपुष्पकुशेध्मादिसमाहरणकर्शितः॥ विप्रेण ताडितः क्लिष्टः शोकदुःखाकुलोऽनिशम्। सान्त्व्यमानोऽनिशं मात्रा व्यनैषीत्कालपर्ययं॥ अशुभं वा शुभं वापि ह्यशक्यं शक्यमेव वा। कालकौशिकतद्भार्यातत्सुताद्युक्तमञ्जसा॥ कुर्वन्ती देहसञ्जातश्रमादी- नविचार्य च। शिशूक्तान्यपि कुर्वाणा युक्तायुक्तानि भूपते॥ ताडनं परुषं वाक्यं कटुकं कर्णशूलकम्। मर्मच्छेदकरं क्रूरमश्राव्यं शृण्वती सदा॥१०॥ संताडनादि तत्सर्वं दिष्टमेव विभाविता। एवं सा काल- मनयद्दुःखिनी पतिना विना॥ एवं दुर्वसतिं तेषां वसतां धर्मनन्दन। समा नव च तिस्रश्च गता ऊनाद्विवासराः॥ एकदोपान्त्यदिवसे लोहिताश्वस्सबालकैः। इन्धनार्थं गतो बालः शस्त्ररज्ज्वादिवर्जितः॥ अनभ्यासवशात्काष्ठसञ्चयासक्तहस्तवान्। वृक्षच्छायां समाश्रित्य बिभ्यन्नास्ते द्विजन्मनः॥ विषण्णवदनो दीनो भयाद्धृदयवेपथुः। तावत्ते बालकास्सर्वे काष्ठभारान्बबन्धिरे॥१५॥ चिराभ्यासबले- नैव क्षणेन कृतहस्तवत्। तं चानर्हाणि काष्ठानि दृष्ट्वा कानिचिदग्रतः॥ निधाय खिन्नवदनं जहसुस्ते परस्परम्। कृपालवो हि ते सर्वे काष्ठा- न्यर्हाणि बालकाः॥ संभूय योज्य बध्वा च वाहयामासुरोजसा। अशक्तो भारमुद्वोढुं खिद्यमानः पदे पदे॥ पालाशदण्डमादाय पश्चा- त्तेषां शनैर्ययौ। विसंज्ञोऽल्पपदन्यासो निश्वसंश्च पुनःपुनः॥ अन्तर्मग्न- गलो भाराद्दूरं ते पुरतो ययुः। शनैस्तटाकमासाद्य भृशोदन्याप्रपी- डितः॥२०॥ काष्ठभारं वहन्नेवात्यशक्तो भारकातरः। आस्वदन्नं प्रविश्याप्सु तस्मिन्पिबति शीतलम्॥ प्रमादात्पतितो भारः पीत्वा तोयं यथेच्छतः। तीरे भारं समानीय समाकृष्य जलात्ततः॥ सुविश्रम्य मुहूर्तं तु तीरे भारश्रमातुरः। वितुदन्मस्तको भूत्वा बन्धा-

भावादथातुरः॥ स वल्मीकाग्रसंरूढान्कोमलाग्रान् सुदीर्घकान् । तद्ब-न्धकरणार्थं तान् गृहीतुमुपचक्रमे ॥ यावत्प्रसार्य हस्तं तान् कुशान् गृह्णाति भूपजः। तावत्स कृष्णसर्पेण संदष्टो मुनिचोदनात् ॥२५॥ सर्वावयवसंरोहद्गरलाक्रान्तमस्तकः। अदशत्कृष्णसर्पो मां हाहेति प्ररु-रोद ह ॥ क्रोशन्नुच्चैःपपातोर्व्यां ममार च नृपात्मजः । दृष्ट्वा ते बालकास्सर्वे भारान् विन्यस्य भूतले ॥ मृतं बालं विनिश्चित्य भारा-नादाय ते पुनः । गत्वा न्यवेदयन्मात्रे सर्पदष्टं सुतं मृतम् ॥ गत्वा पश्यानय सुतं वर्तन्यैवाधुना शुभे । सुव्यक्तया न भेतव्यमार्द्रपल्लव-चिह्नया ॥ श्रुत्वा साऽपि पपातोर्व्यां मूर्च्छया च परिप्लुता । सा ससा राबुद्भ्रष्टा चञ्चलेव नृपांगना ॥३०॥ तमुदन्त ततः श्रुत्वा चामर्षा-त्कालकौशिकः । कशामादाय लोहाग्रां यावदायाति कौशिकः॥ ताव-न्मुहूर्तादाश्वास्य स्वयमात्मानमात्मना । गृहं गन्तुमुपाक्रामच्चित्तविन्य-स्तरोदना ॥ सा विह्वलाङ्गयष्टि स्वां मार्जयन्त्यश्रुसन्ततिम् । शून्यं जगत्प्रपश्यन्ती निरालोकं निरास्पदम् ॥ अथ विप्रेण सा मार्गे ताडिता कशया बहु । राजानं चिंतयंती च दिष्टं चैव पुराकृतम् ॥ न किंचिदूचे विप्रं च साऽस्तु वा माऽस्तु वा तदा । गृहकृत्यमशेषेण-कृत्वा याहि कुलाधमे॥३५॥ बहुमूल्यक्रयक्रीता दासाऽभूत्स ममाधमे। ममैव हानिस्तन्नाशे काऽपि हानिर्न तेऽधमे॥ मातृपुत्रत्वसंबन्धो युवयोः कः परालये । तावुभौ स्वामिनः पुत्रौ स्वाम्याज्ञावशगौ यतः ॥ दासि कस्माद्रोदिषि त्वं कार्यार्थे गृहमाव्रज । यतस्त्वद्धानिवृद्ध्यो-र्हि स्वयं यास्यामि बालिशे ॥ त्वमागच्छ गृहे कार्ये कुरु रास-भधर्मिणि । उक्त्वैवं ताडयित्वाऽथ गृहं तामनयद्द्विजः ॥ गत्वा तटाकात्सा साध्वी कालकौशिकवेश्म तत् । संत्यक्तरोदना धीरा गृह-कृत्यमथाऽकरोत् ॥४०॥ तेषु सर्वेषु भुक्तेषु रात्रौ भुक्त्वा नृपाङ्गना । पुराद्बहिर्विनिर्गत्य क्रोशन्ती कुररी यथा ॥ सुतपञ्चत्ववातौघदुःखदा-वाग्नितापिता । बालकादिष्टया तन्वी वर्तन्या पत्रलक्ष्मया ॥ गत्वा

तटाकतीरांते वल्मीकोपांतशायिनम् । शिरोपांतस्थकाष्ठौघं विवर्ण-वदनाम्बुजम् ॥ प्रसारितायतभुजपदद्वंद्वं भयानकम् । कम्बुकण्ठं महोरस्कं पीनांसं वृषभेक्षणम् ॥ *मुक्तापूरितशुक्तास्यं हेमादर्श-कपोलकम् । तिलप्रसूननासाग्रमष्टमीशशिसन्निभम् ॥४५॥ सुस्निग्ध-नीलकेशांतं पाञ्चजन्यनिभश्रुतिम् । वृकोदरलसत्तिर्यक्तिवलीशालि-तोदरम् । तिरस्कृतेभनासोरुमीषदुन्नतजानुकम् । न्यक्कृतस्मरतूणीर-जङ्घाद्वयमनोहरम् । सविन्यस्तातिरूढोरुगुल्फद्वंद्वविराजितम् । कूर्मो-र्द्ध्वभागविलसत्पादपृष्ठद्वयाश्रितम् ॥ स्वर्गलोकात्सुविभ्रष्टं जयन्तमिव भूगतम् । किंवा कौ पतितौ स्वर्गादश्विनावेकतां गतौ ॥ पुराराति-भयात्कामस्त्यक्त्वा रतिमिहागतः । किंवा कौशिकरोषेण दिवं त्यक्त्वा दिवाकरः ॥५०॥ शेते वाऽसाविहागत्य हरिश्चन्द्रव्यथातुरः । पश्यन्तीत्थं सुतं साध्वी नासाविन्यस्ततर्जनी ॥ अहो मे महदाश्चर्य विधे तव विचेष्टितम् । एतावद्दुःखमतुलं मया ते सञ्चितं पुरा ॥ अधुनाऽस्मि त्वया नूनं क्लेशितास्स्मो भृशं वयम् । इत्थं विचिन्त्य मनासि सुतं दृष्ट्वा मुहूर्तकम् ॥ उदरं स्वं ताडयित्वा पतिता तस्य वक्षसि । लब्धसंज्ञा च सा देवी दुःखेन प्रेरिता स्थिता ॥ रुरोद भृशमुद्विग्ना रोदयन्ती वने स्थिताः । देवताश्च मृगान्पक्षीन् वृक्षगुल्म-लता अपि ॥५५॥ दिवसः को विनाऽर्केण विना चन्द्रेण का निशा । विना वृषेण का गौरी माता पुत्रेण का विना ॥ पत्या विना च का भार्या कः पतिर्भार्यया विना । विना धर्मेण को लोकः कः पुमान् विद्यया विना ॥ उत्तिष्ठ पुत्र गच्छावः किं मां त्वं नाभिभाषसे । त्वया विना न यास्यामि विवत्सा सुरभिर्यथा ॥ पितृविक्रयदोषेण किं त्वं कोपेन तिष्ठसि । द्रव्याभिलाषया राजा न त्वां विक्रीतवान् सुतम् ॥ सत्यप्रतिज्ञारक्षार्थं न तं क्रोद्धुं त्वमर्हसि । उत्तिष्ठ वत्स मे नाथः पिता त्वां प्रतिमोक्षिता ॥६०॥ उत्तिष्ठ राजशार्दूल मां दृष्ट्वा मम सत्सुत । ममानन्दलताकन्द मम प्राणावलम्बन ॥ मम वाञ्छालता-

पद्म मद्रजेन्द्राशिशूपम। उत्तिष्ठ केसरिशिशो मम शोकमपानुद ॥ संस्थापय मम प्राणान् नोचेद्यास्याम्यहं क्षयम्। उत्तिष्ठ माऽभिषिञ्चस्व त्वद्वचोमृतधारया ॥ क्व यास्यामि विनाऽहं त्वां कुतो मे त्वां विना गतिः। कैस्साकं किमहं वक्ष्ये को मे दुःखं विनाशयेत् ॥ दुःखिता दुःखिता चाहं दुःखिता दुःखिता भृशम्। क्लिष्टा चाहं पुनःक्लिष्टा क्लिष्टा चाहं पुनःपुनः॥ रुदित्वैव चिरं देवी चुक्रोशोच्चतरं पुनः ॥६५॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने पञ्चविंशोऽध्यायः

## षड्विंशोऽध्यायः ॥२६॥

मार्कण्डेय उवाच—एवं रुदन्त्या राजेन्द्र चन्द्रवत्या महाध्वनिः। कर्णं विदारयामास श्मशानस्थस्य भूपतेः॥ श्रुत्वा तद्रोदनारावं हृदयद्रावकं परम्। महावने महारात्रौ का नु रोदिति सुस्वरम् ॥ प्रेतेन तत्र भाव्यं तु विचार्येत्थं नृपोत्तमः। मन्त्रिणं तत्र संस्थाप्य रोदनारावमन्वगात् ॥ जिज्ञासार्थं क्षणं तस्थौ गुल्मान्तरित एव च। तदापि सा विशालाक्षी पुत्र पुत्रेति रोदिति ॥ इयं का नु सुतोऽयं क इति चिन्तातुरो नृपः। मयापि श्रुतपूर्वोऽयं रोदनध्वनिरुच्चकैः ॥५॥ विचिन्त्यैवं चिर राजा किं मे कार्यमनेन हि। स्वामिकार्यप्रवृत्तस्य निश्चित्यैवं स सत्वरः ॥ शववासस्तदादातुं स्वामिनोक्तमहापयन्। प्रेतान्तिकमुपागच्छत्सा भीता दूरतो गता ॥ राजा चण्डालवेषेण वासः शवमुखार्पितं। अपानयति हस्तेन तमस्यन्धे नरेश्वर ॥ गृह्णन्तं पाणिना भूपं राज्ञी वचनमब्रवीत्। खादस्व रक्षः पुत्रं मा मां च खादस्व दुःखिताम् ॥ अनंतपारदुःखोदशोककल्लोलताडिताम्। निर्विण्णां भक्षयित्वा मां सुतृप्तो भव राक्षस ॥१०॥ त्यज पुत्रमिमं बालं जीविष्यति बलाद्यदि। हा रक्षो भक्ष मां दीनां सुपुत्रेण विना हताम् ॥ इत्युक्त्वा शवमागत्य तमागत्य प्ररोदिति। न पारयामि मे पुत्रं भक्ष्यमाणं त्वयेक्षितुम्। व्यापाद्य मां राक्षसेन्द्र यथेष्टं भक्ष मा

चिरम् ॥ मार्कण्डेय उवाच— राक्षसेति वचश्श्रुत्वा तयोक्तं भृशकातरः। राजा दध्यौ चिरं स्वांतः किमहं राक्षसोऽभवम् ॥ कुतो मे राजवेषस्सः कुतो मे कान्तिरुत्तमा। कुतो मे रूपलावण्यं कुतो मे मधुरा च वाक् ॥ सुस्निग्धनीलकेशांत आकारः शोभनःकुतः। इत्यात्मनि सुसंचिन्त्य राजा तामब्रवीत्पुनः ॥१५॥ शववस्त्रं तदादाय चोचैस्थित्वाऽतिविस्मितः। न राक्षसोऽहमबले न भेतव्यं त्वयाऽनघे ॥ मानवोऽहं प्रजानाथो मनुवंशप्रवर्धनः। शृणु कल्याणि मद्वाक्यं भयं त्यक्त्वा स्थिरा भव ॥ हरिश्चंद्र इति ख्यातो यदि दृष्टः श्रुतस्त्वया। तं मामवेहि कल्याणि न भीः कार्या कदाचन ॥ अयोध्यायाः पती राजा इक्ष्वाकुकुलनन्दनः। उशीनरसुता भार्या लोहिताश्वश्च मे सुतः ॥ सप्तद्वीपार्णवा पृथ्वी मद्बाहुबलमाश्रिता। कुतोऽपि कारणाद्भद्रे राज्यात्प्रभ्रंशितोऽस्म्यहम् ॥२०॥ अन्योन्यस्पर्धया भद्रे विश्वामित्रवसिष्ठयोः। ममदेहार्धभागा सा मम पुत्रोऽहमेव च ॥ सत्यप्रतिज्ञारक्षार्थं विक्रीतौ कालकौशिके। अहं मयापि विक्रीतश्चंडाले वीरबाहुके ॥ दत्तं श्मशानपालत्वं तेन मे तनुमध्यमे। तवेदं रुदितं श्रुत्वा स्वाम्याज्ञावशगोह्यहम् ॥ शवद्रव्यमुपादातुमागतोऽहमिहानघे। अतोऽहं राक्षसो नैव पश्य मे वैधसी क्रियाम् ॥ मार्कण्डेय उवाच— ततो देवी महाभागा हरिश्चन्द्रं महीभुजम्। विज्ञाय वचसा व्यक्तं भूपस्य व्यथिता बभौ ॥२५॥ उत्थाय सहसाऽऽगत्य हाहा हाहा अहो अहो। क्रोशंत्युच्चैस्तरां तस्य पादयोः पतिताऽग्रहीत् ॥ हरिश्चन्द्र उवाच— का त्वं कोऽहं किमर्थं त्वं पतिता मम पादयोः। चण्डालोऽहं न जाने त्वामित्थं तां सोऽभ्यभाषत ॥ मा मा मां स्पृश भद्रं ते चण्डालः पतितोऽस्म्यहम्। इतीदं वचनं साध्वी नाशृणोन्मूर्छिता तदा ॥ समाश्वस्ता मुहूर्तेन भर्तारमिदमब्रवीत्। हाहा हंत ममैकांत क्व तद्रूपं मनोहरम् ॥ क्व नु सा मधुरा वाणी क्व

चाकारो मनोहरः। क्व सा हा कांतिरतुला क्व नु ते रूपमुत्तमम् ॥३०॥ कुत्सितं गर्हितं कष्टं कुतस्ते समुपागतम्। चण्डालं सुपरित्याज्यं सर्ववर्णविगर्हितम् ॥ अहं ते महिषी राजन्पित्रा दत्ताऽग्निसाक्षिकम्। उशीनरेण भूपेन्द्र चन्द्रवत्यस्मि नामतः॥ भार्या तवाहं दासीच च्छायावत्त्वदुपाश्रया। लोहिताश्वः सुतोऽयं ते तव वंशविवर्धनः॥ हृदयानंदजननस्तव वंशस्यभूषणम्। येन त्वमनृणो लोके कुलोत्तारणसूनुना॥ सोऽयं तवौरसः पुत्र इंधनार्थं गतो वनम्। सर्पदष्टो मृतः प्रायाद्भारमग्नांगकंधरः। त्वत्कोपान्नंदनारण्ये क्रीडितुं चाप्सरोगणैः ॥३५॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने षड्विंशोऽध्यायः॥

## सप्तविंशोऽध्यायः ॥२७॥

मार्कण्डेय उवाच— मृतं पुत्रमथाकर्ण्य विह्वलो गतचेतनः। पपात मूर्छितस्सोऽपि छिन्नमूल इव द्रुमः॥ समाश्वस्तस्ततो राजा लब्धसंज्ञो नृपोत्तमः। बाष्पपर्याकुलो भूत्वा विललापातिदुःखितः॥ नष्टोऽसि पुत्र नष्टोऽसि का गतिर्मम पुत्रक। विहाय पुत्र मामेवं कां गतिं प्रतिपत्स्यसे॥ कस्याननं प्रपश्यामि कं च बालालपाम्यहम्। एकस्त्वमसि मे पुत्रो महतस्तपसो व्ययात्॥ देवानां च ऋषीणां च पितॄणां च ऋणत्रयम्। क्रमेणैव प्रहातव्यं त्वयाऽसंक्रामितं मम ॥५॥ कां दिशं प्रतिपत्स्येऽहं कं च वा शरणं व्रजे। कं देशं प्रतिपत्स्यामि को मे दुःखं निवारयेत्। प्रियैराख्यानकथनैः को मां संतोषयेत्सुत॥ किं मयाऽपकृतं वत्स कस्मान्मां नाभिभाषसे। मूल्यविक्रयदोषेण किं मां नैवाभिभाषसे॥ उत्तिष्ठ वत्स किं शेषे श्मशानेऽस्मिन्सुदारुणे। शवभस्मसुदिग्धांगः क्षीणपुण्यस्सुरो यथा॥ कुरुष्व पूर्णमुत्संगं पूरयस्व मनोरथं। संमार्जयाश्रुपातं मे समाश्वासय मातरम्॥ एषा ते विक्लवा माता संभाषयितुमिच्छति। विवृत्य वदनं पुत्र वद मे किमपि प्रियं ॥१०॥

उन्मील्य नयने पश्य शोकाग्निक्लिष्टमाननम्। संस्थापय मम प्राणान्हृदयप्राणवल्लभ ॥ मार्कण्डेय उवाच– एतस्मिन्नंतरे राजन्विश्वामित्रो वियद्गतः। आपूरयन्दिशस्सर्वा देववाद्यमहास्वनैः ॥ प्रकिरन्पुष्पवर्षं च स्वभासा द्योतयन्दिशः। धीरोदात्तस्वरो धीमान् राजानमिदमब्रवीत् ॥ शृणु राजन्हरिश्चन्द्र वचो मेऽवहितश्शुभम्। तथ्यं पथ्यं हितं चैव लोकयोरुभयोरपि ॥ जीवंतं चेच्छसि यदा कुमारं कुलभूषणम्। दासीभावविमुक्तां च तव पत्नीं यशस्विनीम् ॥१५॥ जयाविजययोः पाणिं गृहाण पृथिवीमपि। विक्रीता गृहिणी पत्नी भवता न हि ते सती ॥ अनाश्रमी न तिष्ठेस्त्वं क्षणमात्रमपि प्रभो। वहस्व कन्यके मह्यं नानृतेनोच्यते नृप ॥ गृहाण पाणिं धर्मज्ञ सुतयोर्मम मा शुचः। अकार्यकोटिं कृत्वापि भुक्त्वाऽभाग्यशतानि च ॥ चण्डालात्प्रतिगृह्यापि कृत्वा वारिधिलंघनं। राज्ञस्संसेव्य चात्यंतं कुटुंबं बिभृयान्नरः ॥ कुटुंबभरणासक्तो येन केनापि वा नृप। संपोष्य भृत्यवर्गांश्च गृही स्वर्गाय कल्पते ॥२०॥ किं बहूक्त्या नृपश्रेष्ठ शृणु मे वचनं परम्। स्थापयिष्याम्यहं स्वर्गे भवन्तं भज मे सुते ॥ नो चेदितोऽपि महतीमापदं प्रतिपत्स्यसे। दुरन्तां मरणान्तां च पुत्र्यौ मे भज भूपते। न नर्मयुक्तं ह्यनृतं हिनस्ति न स्त्रीषुराजन्न विवाहकाले। प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥ राज्ञा चोरेण वा प्राप्ते सर्वस्वहरणे नृप। चोरग्रस्ते तन्मरणे मिथ्योक्तं स्वर्गदं विदुः ॥ मार्कण्डेय उवाच— एवमुक्ते मुनौ तस्मिन् छलवादिनि सर्वदा। उत्स्मयित्वाऽथ राजेन्द्रः पुनर्वचनमब्रवीत ॥२५॥ हरिश्चन्द्र उवाच— बुद्धिमानसि विप्रेन्द्र सर्वज्ञोऽसि भवानहो। अतत्वज्ञप्रणीतस्य शास्त्रस्यास्य बिभेम्यहं ॥ कुशास्त्रमार्गनिरता यौक्तिका हेतुवादिनः। यथावसरवक्तारः प्रयान्ति नरकान् बहून् ॥ पंचानृतान्यपि वदेत्परस्यापि हिताय हि। अश्वमेधायुतं पुण्यं सत्यं च तुलया धृतं ॥ अश्वमेधायुतात्पुण्या-

त्सत्यं दशगुणोत्तरम्। एकप्राण्युपकारश्च महादानशतानि च ॥ महादानशतेभ्यश्च विशिष्टं ह्येकरक्षणम्। आत्मार्थं प्रवदन्मर्त्यो नरकं चोपपद्यते ॥३०॥ पितात्वमेव माता मे गुरुर्बन्धुस्त्वमेव मे। पुत्रोऽहं तव शिष्योऽहं दासोऽहं ते मुनीश्वर ॥ तन्मामेवं समुद्दिश्य मा वादीरशुभं वचः। न च द्वेषान्न च क्रोधान्न भयान्नार्थकारणात् ॥ न हेतुवादाद्दाक्षिण्यात् न स्नेहान्न च चापलात्। न पक्षपातादालस्या त्स्वप्नेऽपि स्खलनेऽपि वा ॥ दुःखे प्राणात्यये वाऽपि नानृतं वक्तु-मुत्सहे। राज्ञैवमुक्तो गाधेय स्तत्रैवान्तर्हितोऽभवत् ॥ अहोऽस्य धीरता राज्ञ इति विस्मितमानसः। संत्यक्तचोदनो धीरः शोकमोहौ विसृज्य च ॥३५॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने सप्तविंशोऽध्यायः

## अष्टाविंशोऽध्यायः ॥२८॥

हरिश्चन्द्र उवाच—इमं बालं समादाय यास्यामि पितृकान-नम्। इतोपरि स्थितेऽस्माकमशुभं संभविष्यति॥ त्वं चाशु गच्छ भद्रं ते दिष्टं मनसि निश्चितम्। त्वदर्थं चापि पुत्रार्थं प्राणार्थं चापि भामिनि ॥ असत्यं नोत्सहे वक्तुं सत्यं मे परमागतिः। माता पिता सुतो भार्या मित्रसबन्धिबान्धवाः ॥ सुहृन्मित्राणि भृत्याश्च सुलभा जन्मजन्मनि। मरणानि च जन्मानि सत्यमेकं सुदुर्लभम् ॥ नाथस्य भवनं गच्छ त्वमज्ञाता यथागतम्। क्रयकर्तुः कार्यलोपात्त्वं यास्यस्य-ऽधमां गतिम् ॥५॥ त्यक्त्वा शोकं च दुःखं च बुद्धिमास्थाय सात्वि-कीम्। अतीतं नानुशोचस्त्वं दिष्टं मत्वा बलोत्तरम् ॥ मार्कण्डेय उवाच- अथ शोकपरीताङ्गी प्रस्खलन्ती पदे पदे। दैवमेवानुशोचन्ती प्रस्थिता ब्राह्मणालयम् ॥ मध्ये मार्गं ददर्शाऽथ सा चोरान् गूढ-संस्थितान्। आदाय बालकं कंचित् द्रव्यार्थं भीमविक्रमान् ॥ व्या-पाद्यमानस्तैर्भीमैर्द्रव्यार्थं बालको रुदन्। मा माऽवधीष्ट मां यूयं द्रव्य-माच्छिद्य गच्छत ॥ इत्थमार्तस्वरं श्रुत्वा कृपाविकृतमानसा। न हन्त-

व्यां न हन्तव्यो बालोऽयं मुच्यतामिति ॥१०॥ यदि राजा प्रमाणं वो काशीशो धार्मिकप्रियः। क्व यास्यथ शिशुं हत्वा द्रव्यमाच्छिद्य पापिनः॥ न गन्तव्यं न गन्तव्यं न गन्तव्यं पदात्पदम्। इति तद्वचनं श्रुत्वा भीताश्चोरा व्यचिंतयन्॥ गृहीत्वा पादविक्षेपमागताःपालका इति। भिया सन्त्यज्य तं बालं चोरास्ते प्रद्रुता द्रुतम्॥ बालस्याभ्याशमागत्य तमुवाच पतिव्रता। न भेतव्यं न भेतव्यं न भेतव्यं त्वया शिशो॥ इदानीमागमिष्यन्ति त्वदीया भवदन्तिकम्। मारोदीर्याम्यहं वत्स परिसान्त्व्येति सा गता ॥१५॥ पुरपालास्ततस्सर्वे गूढाः शब्दानुगामिनः। ददृशुस्ते तदाऽऽगत्य बालकाभ्यर्णसंस्थिताः॥ समाश्वास्य शिशुं दूरे संस्थितां करुणास्पदम्। महान्धकारे संस्यूते प्रज्वलद्दीपपाणयः॥ विचिन्वन्त स्ततश्चोरान्नापश्यन्कुत्र कश्चन। द्रव्यं बाल च ता दृष्ट्वा नापश्यन्कश्चनापरम्॥ तामवोचन्ननार्ये त्वं कुत्र यासि कुलाधमे। पुत्रस्त्वर्वीरसूर्नत्वं न प्रसूताऽसि सत्कुले॥ शिशुघ्नी वध्यतामेषा लब्धद्रव्यापहारिणी। अस्माभिस्स्त्री न हन्तव्या राजानं प्रापयामहे ॥२०॥ इत्युक्ते कैश्चिदपरे तामपृच्छन्नृपोत्तम का त्वं कस्य सुता भार्या कस्य ते भवनं कुतः॥ बाल किमर्थमाहार्षीरधुनाऽत्रागता कथम्। अन्धे तमसि दुष्पारे निर्भीता कथमागता॥ एकाकिनी सहायं ते न पश्यामो हि कश्चन। अरण्यवासिनी नित्यं किं वा त्वं वनदेवता॥ श्मशानदेवता वापि यथार्थं कथयस्व नः। भवत्याऽपहृतो वाऽयं किमन्येनाहृतो वद॥ मार्कण्डेय उवाच—

पृष्टैवं सा दुराचारैः किञ्चिन्नोवाच विह्वला। साधु वाऽसाधु वाऽथापि केवलं धर्मतत्परा ॥२५॥ एतस्मिन्नन्तरे राजन् विश्वामित्रो महातपाः। आवर्तयंस्तंभविद्यां वाक्स्तंभं ह्यतनोत्तदा॥ मन्त्रस्तंभितवाक्साध्वी नासाग्रन्यस्ततर्जनी। स्थिता स्मिता भागधेयं प्रशशंसात्मनि स्थिरम्॥ साधु साधु विधे साधु न कोऽपि सदृशस्तव। भवदुद्दिष्टपन्थानमात्मभूरपि हंत न॥ अतिक्रांतुं हरो वाऽपि हरिर्वा शक्नुयादहो। इति

विस्मितचित्तां तामियं चोरेति ते खलाः॥ सम्यक्पश्चाद्दृढं बध्वा नेतु मारेभिरे तदा। ततः सा बालचोरेति चारैरुक्ताऽतिसाहसैः ॥३०॥ प्रावेपत महाभाग प्रवाते कदली यथा। अहो किं बालचोराऽहं साधु साधु विधे नमः॥ विस्मितामात्मनीत्थं तां पाशबद्धां नृपोत्तम। अज्ञाततदुदन्तास्ते पुनरूचुरनिन्दिताम्॥ कथं पापे दुराचारे निशीथे निरपत्रपे। स्वपुत्रसदृशं बालं कुतो हिंसितवत्यसि॥ तैरेवमुच्य-मानाऽपि सा नोवाच शुभाशुभम्। कशया ताडिता घोरैस्साऽचोरा पापकर्मभिः॥ भर्तुर्वियोगदुःखेन पुत्रस्य मरणेन च। धिक्कृत्य मानुषं जन्म मृत्युमेवाभिनन्दति॥३५॥ न हि कर्मक्षयाज्ञातु ऋते देहः पतिष्यति। एतद्बाधाशतं सर्वं मन्वाना प्राकृतं जने॥ मौनेन नीय-माना सा स्थापिता राजसन्निधौ। सभ्यैः शास्त्रार्थतत्त्वज्ञैः पृच्छ्यमाना पुनःपुनः॥ तत्र वृत्तान्तसंबद्ध नाब्रवीत्साध्वसाधु वा। तेहोचुः पाल-काः सत्य विनैतां तत्र केचन॥ न सन्ति लुण्ठकाः सभ्याः चोरैवेयं न संशयः। बालकस्यान्तिके चेयं धनं चास्याः पुरस्स्थितम्॥ पद-पङ्क्तिर्न दृष्टा च चोराणां वसुहारिणाम्। राज्ञा पृष्टास्सदस्यास्ते वध्यतां बालघातिनी॥४०॥ सुचित्रवधयोग्येयमित्युक्त तैर्नृपोऽब्रवीत्। व्या-पाद्यतामियं दुष्टा दृष्टा विकृतदर्शिनी। पतिघ्नी च शिशुघ्नी च निहन्त-व्या न संशयः॥ मार्कण्डेय उवाच— आज्ञप्तास्ते नरेन्द्रेण तामानीय पतिव्रताम्। उदितारुणवेलाया वीरबाहोस्समार्पयन्॥ उत्तिष्ठोत्तिष्ठ चण्डालं वीरबाहो नृपाज्ञया। छिन्द्ध्येतां राजतनयभूषणान्यप-हारिणीम्॥ वीरबाहुस्ततोवाक्यमब्रवीदात्मज तदा। उत्थाप्य तामयं दासः शेतेऽद्यापि सुमन्दधीः॥ स चण्डालसुतो गत्वा पुण्य-श्लोकोटजं नृप। प्राबोधयद्धरिश्चन्द्रमात्मध्यानपरायणम् ॥४५॥ तं सर्पदष्टमाज्ञाय श्मशाने सन्निधाय च। सुप्त्वाऽर्धरात्रं स्वं पुत्र-मुत्थायोषसि संस्थितम्॥ उत्तिष्ठ दासापशद दासदासाधमाधम। विस्मृत्य स्वामिकार्याणि शेषे किं त्वं प्रमीतवत्॥ आज्ञापयति ते

स्वामी वीरबाहुः पिता मम। शेषे किं भास्वत्युदिते निद्रा दासस्य नोचिता ॥४८॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने अष्टाविंशोऽध्यायः

## एकोनत्रिंशोऽध्यायः ॥२९॥

मार्कण्डेय उवाच— इत्थं प्रबोधितस्तेन शयनादुत्थितो नृपः। स्वाम्याज्ञावशगो धीमानुवाचात्मनि दुःखितः॥ हरिश्चन्द्र उवाच — वेदार्थे संशयः किं वा वेदान्ते न्यायविस्तरे। प्राभाकरे वा भाट्टे वा मीमांसाद्वितयेऽपि वा॥ वैयाकरणशास्त्रे वा कल्पशिक्षानिरुक्तके। छन्दस्सु ज्योतिषे वाऽपि पुराणेषु च संशयः॥ ऋग्वेदे सामवेदे वा मन्त्रब्राह्मणनिर्णये। आयुर्वेदे धनुश्शास्त्रे गान्धर्वे नीतिशास्त्रके॥ सर्वयागेषु यज्ञेषु संशयः सवनेषु च। *पश्वैकादशनी वापि यूपैकादशनीमपि ॥५॥ पशुसोमविकारेषु प्रायश्चित्तेषु सर्वशः। कैश्च देवासुरे युद्धे असुरैर्योधयाम्यहम्॥ वीरबाहुरुवाच — त्वया वध्योरिपुर्योऽस्ति न कश्चित्पृथिवीतले। अजातशत्रुं मां विद्धि तस्माच्छृणु वचो मम॥ हन्तव्यैषा दुराचारा बालद्रव्यापहारिणी। पतिघ्नी च महाघोरा राजाज्ञापरिपन्थिनी। असिना तीव्रधारेण शिरःकायादपाहर॥ हरिश्चन्द्र उवाच— अहो पापमहोपापं शान्तं पाप पुनः पुनः। हन्त हा हा विधे पापिन् किं मां खेदयसे भृशम्॥ भग्नाक्षं शीर्णकवचं न्यस्तशस्त्रं पराङ्मुखम्। दष्टांगुलिं कीर्णकेशमपुत्रं चैकपुत्रिणम् ॥१०॥ स्त्रीसंज्ञकं च स्त्रीपूर्वं भीतं च शरणागतम्। न कदाचिद्धनिष्यामि सोऽहं हन्यां कथं स्त्रियम्॥ बालवृद्धातुरक्लीबबधिरान्धकपङ्गुकान्। स्त्रैणवामनकुब्जादीन् न हन्युर्धर्ममानिनः॥ स्त्रियःसर्वा न वध्याश्च ह्यपराधशतेष्वपि। न हन्यात्पुरुषो युद्धे स्त्रियमप्याततायिनीम्॥ स्वयं तया हि मर्तव्यं तां हन्यान्न कदाचन। स भूपतेर्वचः श्रुत्वा वीरबाहू रुषाकुलः॥ अब्रवीत्परुषं वाक्यं स्वजातिसदृशं नृप। मदीयं धनमाच्छिद्य निवेद्य ब्राह्मणाय च॥१५॥

दासो भूत्वा ममाद्यत्वं प्रज्ञावादांश्च भाषसे। एवं तदा त्वया नोक्तं यदाऽहमददां धनम्॥ ममाज्ञां तां पुरस्कृत्य न हन्या यदि पापिनीम्। छिनद्मि तव मूर्धानं कुरु शीघ्रं मयोदितम्॥ यो दोषो हनने चास्याः सोऽस्तु नैव तवानघ। पोतापहारिणी छिन्धि मच्छासनपुरस्सरम्॥ सत्य मच्छासन चैव प्रमाणं यदि तेऽनघ। छिन्धि चास्त्रप्रपातेन नोचेत्तद्देहि मे धनम्॥ मार्कण्डेय उवाच— तस्य तद्वचनं श्रुत्वा स राजा पाण्डुनन्दन। सूनास्थानं समानीय स्थापयित्वा महीतले॥२०॥ आदाय विपुलं खङ्गं व्याघ्रचर्मसमावृतम्। कोशाद्विकृष्य तं खङ्गं रविमण्डलसन्निभम्॥ उद्धृत्य दक्षिणं हस्तं विनाम्य च शिरोधराम्। अजस्रावभृथार्द्राङ्ककेशेष्वाकृष्य पाणिना॥ दिशोऽवलोक्य परितो भानुमात्मानमेव च। कालकर्मानुगश्चैव वचनं चेदमब्रवीत्। एवं हि बलवल्लोके कर्म हन्त जगत्त्रये। *निरापराधिनं कालमज्ञो लोको विनिन्दति। अज्ञात्वाऽऽत्मकृतं मूढः स्वकृतं चैव विन्दति। उक्त्वा सती नृपोऽवादीद्विधि भूयो नरेश्वरः। शोकमोहपरीतात्मा विस्मृतात्मानुभावतः॥२५॥ हरिश्चन्द्र उवाच— भागधेय नमस्तेऽस्तु बलवानीदृशो भवान्। अन्ये खलु न सन्तीह पृथिव्यां बाहुजा विधे॥ अबलाऽतिविशालायां मद्भस्ते बाधितुं*त्वया। किं मयाऽपकृतं भद्र विधे तव पुराभवे॥ येन नानाप्रकारैस्त्वं मामेवमनुवर्तसे। पृथिव्यां सागरान्तायां भूपालान् सर्वशस्त्वया॥ विसृज्यैतान् जनपदान् कथमासादितोऽस्म्यहम्। मया कारयितुं कर्म कुत्सितं लोकगर्हितम्॥ सद्भिर्विगर्हितं चापि स्त्रीवधं नीचचेष्टितम्। भ्रूणहत्याधिकं चैतल्लोकत्रयविनाशनम्। अयुक्तं ते विधे तुभ्यं नमस्ते त्यजमामितः॥३०॥ ये धर्मनिरताश्शांतास्सत्यवन्तोऽनसूयकाः। न प्राप्नुवन्ति ते क्वापि विपदं काश्चिदेव हि॥ एवं बहुविधं दीनं विलप्य स विधिं प्रति। पुनर्दिशोऽवलोक्याह भार्यां परमशोभनां॥ चिन्तयस्व यथाकालं मरणं त्वामुपस्थितम्। इष्टा ते

देवता काचिद्या ते हृद्यनुभाविता॥ मार्कण्डेय उवाच–उक्तेति सा तदा देवी हरिश्चन्द्रेण धीमता। समाधाय मनस्स्वस्थं देवतां स्वामुदैरयत्॥ चन्द्रवत्युवाच— आढ्यो वाऽथ दरिद्रो वा सुभगो दुर्भगोऽपि वा। मूर्खो वा पंडितो वापि बधिरः काण एव वा॥३५॥ कुब्जो वा वामनो वापि जडो न जड एव वा। धर्मिष्ठो वाप्यधर्मिष्ठो व्याधितस्सुखितोऽपि वा॥ महापातककृद्वापि हयमेधयुतोऽपि वा। स्त्रैणो वा द्यूतदेवी वा धूर्तो वा पापकोटिकृत्॥ सत्यवादी दयामूर्तिर्दयावान्धर्मतत्परः। वदान्यो वेदविद्वाग्मी सप्तद्वीपाधिपो बली॥ अश्वमेधसहस्राणां यष्टा दाता धनस्य च। ममेष्टदेवता राजा हरिश्चन्द्रो दयापरः॥ तदन्यां देवतां कां चिन्नाहं जानामि भूतले। तन्ममास्तु हरिश्चन्द्रो भर्ता जन्मनि जन्मनि॥४०॥ यदि देवाः प्रसन्ना मे ब्रह्मविष्णुशिवादयः। हरिश्चन्द्रो भवेद्भर्ता मम जन्मनि जन्मनि॥ यदि धर्मःप्रसन्नो मे यदि मे स्याद्दिवाकरः। एकस्य चाहमेकस्यां जाता यद्यस्मि भूतले॥ सत्येन तेन मे भर्ता हरिश्चन्द्रोऽवनीश्वरः। स एव देवतेष्टा मे महादेवस्सएव मे। ब्रह्मा च मे हरिस्साक्षात्स्वर्गो मोक्षस्स एव मे। आकर्ण्य वचनं तस्याः किंचिदभ्युदिते रवौ। हरिश्चन्द्रोऽब्रवीद्भार्यां स्वामिशासनतत्परः॥ हरिश्चन्द्र उवाच— राज्यलक्ष्मीर्वीरलक्ष्मीस्तिस्रो भार्यास्त्वमेव मे। ते मां त्यक्त्वा गते पूर्वं त्वं च मां त्यक्ष्यसि प्रिये॥४५॥ सोढो मया तद्वियोगस्त्वद्वियोगो न हि क्षणम्। किं देवि ते मया कार्यं त्यजेमां मत्प्रसङ्गतिम्॥ स्वयं त्वां विनिहन्तारं त्यज मां पापिनं प्रिये। भवद्धरणमत्यर्थं शरणं याहि भास्करम्। स दास्यति पतिं सौम्यमायुष्मंतं च रक्षकम्॥ चन्द्रवत्युवाच— धन्यास्म्यनुगृहीता च सफलं जन्म जीवितम्। कृतार्था कृतकृत्याऽहं सदृशी न मया भुवि॥ कियत्कालं मया तप्तं तपःपूर्वं भवांतरे। भूत्वा तवाहं भार्या च त्वत्तो मरणमाप्नुयाम्॥ न च मन्युस्त्वया कार्यो वधं प्रति ममाच्युत। कालो हि बलवान्लोके कालो हि दुरतिक्रमः॥५०॥

कालःपचति भूतानि कालस्संहरति प्रजाः । वियोजयति ताः कालः कालः सुप्तेषु *जाग्रति ॥ कालो मारयते राजन्कालो जनयति प्रजाः । जायंते च म्रियंते च कालो नित्यस्सदा नृप ॥ ब्रह्मकोटि-सहस्राणि विष्णुकोटिशतानि च । निवारितानि कालेन प्रदीपा इव वायुना ॥ जातानां च ध्रुवो मृत्युर्मृतानां जन्म च ध्रुवम् । प्राणिकर्मानुरोधेन कालेन विहितावुभौ ॥ इतीयं नियतिर्भूप त्रिमूर्ती-नामपि ध्रुवा । तस्मादपरिहार्येर्थे मा खिदस्त्वं जनेश्वर ॥ दैवे भारं समारोप्य स्वाम्याज्ञां परिपालय । भवान्धैर्यं समास्थाय संस्त भ्यात्मानमात्मना । एकेनैव प्रहारेण शिरःकायादपाहर ॥५६॥

इति श्रीमन्महाभारते वनपर्वणि हारिश्चन्द्रोपाख्याने एकोनत्रिंशोऽध्यायः

## त्रिंशोऽध्यायः ॥३०॥

मार्कण्डेय उवाच— प्रदक्षिणं च सा कृत्वा भर्तारं प्रणिपत्य च । शीघ्रं छिन्धि शिरो *मेति निषसाद महीतले ॥ गृहीत्वा पाणिना केशं विनाम्य च शिरोधराम् । निकृष्य खड्गमुद्धृत्य पाणिना दक्षिणेन च ॥ प्रहर्तुमुद्यते राज्ञि हाहाकारो वियत्यभूत् । यावदभ्युद्यतो बाहुः तच्छिरो हर्तुमञ्जसा ॥ तावत्करिकराकारस्स्तंभितो भूपतेर्भुजः। स्तंभि-तः केन मे बाहुः स्वामिकार्यानुवर्तिनः। इत्थं दिशोऽवलोक्याथ वाक्य-मेतदुवाच ह ॥ हरिश्चन्द्र उवाच—येन मे स्तंभितो बाहुरिन्द्रो यक्षा-धिपोऽथवा। यमो वा वरुणो वापि स दर्शयतु मे पुरः॥५॥ विख्यात-श्चेत्पुमांल्लोके सन्तिष्ठतु ममाग्रतः । राजसी तामसी नैव मम वृत्तिर्हि सात्विकी। सत्यधर्मरता नित्यं स्वामिकार्यहितैषिणी ॥ मार्कण्डेय उवाच— एतस्मिन्नन्तरे राजन् स्तंभयित्वा महाभुजं । आविर्भूय पुरो राज्ञो विश्वामित्रोऽब्रवीद्वचः ॥ माकार्षीस्स्त्रीवधं राजन् स्त्रीमूलं गृहिणो यशः। स्त्रीमूला निखिला लोकाः आब्रह्मभुवनान्नृप॥ तस्मात् स्त्रियं मा वधीस्त्वं हितं शृणु वचो मम । ममेदमान्तिमं धर्म्यं स्वर्ग्यं कैवल्यदं शुभम् ॥ विश्वामित्र उवाच— गृहाण पाणिमनयोः

स्सुतयोर्मम बालिश। जयाया विजयायाश्च ह्येतत्ते सुमहत्फलम् ॥१०॥ दत्ता त्वयेयं पृथिवी सप्तद्वीपा ससागरा। पुनर्मया च दत्ता या तामादातुं त्वमर्हसि ॥ बहुस्वर्णस्य यद्द्रव्यं त्वया दत्तं पुरा मम। तदप्यहं प्रदास्यामि मा वृथैव विनंक्ष्यसि ॥ हरिश्चन्द्र उवाच— किं मे राज्येन भोगेन सुतेन च धनेन च। योऽहं प्राणप्रियां देवीं स्वयं हन्तुं समुद्यतः ॥ दत्ता सा दक्षिणा ब्रह्मन् या पुरा प्रार्थिता मया। दत्ता च पृथिवी तुभ्यं दत्तं नापहराम्यहम् ॥ इतःपरं प्रियं चापि ब्रूहि किं करवाणि ते। इदानीमुचितं देयं मच्छक्यं यत्तव प्रियम् ॥१५॥ विश्वामित्र उवाच— यदि ते मत्प्रियं कार्यं श्रोतव्यं यदि मे वचः। इतोपि यदि दातव्यं गृहाणेदं वचो मम ॥ मार्कण्डेय उवाच— एवमुक्तस्ततो राजा वाक्यमाह पुनःपुनः। एकदोक्तमसद्वाक्यं न वदन्ति मनीषिणः ॥ नाहं स्वप्नेऽपि भवतो व्यर्थवाक्यं शृणोमि तत्। इत्युक्तो राजसिंहेन कौशिको विद्यया पुन ॥ छिनत्त्विति मुनिः कोपात् हस्तस्तंभममूमुचत्। हृदि कोपं समाधाय खड्गमुद्धृत्य संभ्रमात् ॥ स्मरेष्टदेवतां भद्रे इति कण्ठे न्यपातयत्। स खड्गपातस्तत्कण्ठे चंपकादामतां ययौ ॥२०॥ स विस्मितो हरिश्चन्द्रः खड्गेन निशितेन च। छेत्तुकामः शिरस्तस्यास्स्वामिकार्यधुरन्धरः ॥ पुनःपुनश्च चिच्छेद तत्तन्मालाऽभवत्तदा। सत्यमेव पुरस्कृत्य धर्मः सुचरितो मया ॥ यद्यहं स्वामिभृत्यश्चेत् दयावान् सत्यसंगरः। मया सुप्रीणिता देवा ब्रह्मविष्णुपुरोगमाः ॥ ऋषयः पितरश्चैव सर्वात्मा भगवान् रविः। खड्गेनास्याः शिरः छिन्नं भूमौ पततु सुन्दरम् ॥ प्रतिज्ञाय ततो राजा खड्गमुद्धृत्य भीषणम्। सर्वप्राणबलेनैव शिरो यावद्धनिष्यति ॥२५॥ अदृश्यस्तावदागत्य मखड्गं हस्तमग्रहीत्। कृपाणं च कृपापारवीचिप्रेङ्खणमानसः ॥ यःक्षत्रजातिसंजातस्तपसा ब्रह्मणा समः। ततो देवगणास्सर्वे ऋषयः पितरस्तथा ॥ यक्षराक्षसगन्धर्वास्सिद्धविद्याधरोरगाः। आदित्या वसवो रुद्रास्साध्याश्च विश्वे मरु-

द्गणाः ॥ साप्सरोगणगन्धर्वाः अन्ये देवगणाश्च ये । ववृषुः पुष्पवर्षाणि हरिश्चन्द्रमुपागमन् ॥ गायन्तश्च स्तुवन्तश्च साधुवादान्वितेनिरे। आरुढैरावतो वज्री स शचीदेविसंयुतः ॥३०॥ संज्ञायुतो रविश्चैव नक्षत्रैस्सह चन्द्रमाः । आरूढविनतासूनुः श्रीमान् विश्वंभरो हरिः ॥ आरूढहंसो ब्रह्मा च सरस्वत्या समन्वितः। आरूढवृषभः शूली सोमः सोमार्धशेखरः । स्वैस्स्वैश्च पार्षदैस्सार्धं श्मशानं तेऽभिपेदिरे ॥ अग्निवारुणवाय्वीशा आरूढस्वस्ववाहनाः । सशक्तिकाः सपत्नीकाः श्मशानं तेऽभिपेदिरे ॥ मरीचिः काश्यपोऽत्रिश्च पुलस्त्यः पुलहः क्रतुः । अङ्गिराश्च भृगुर्दक्षो नारदःकर्दमस्तथा ॥ वसिष्ठो वामदेवश्च रोमशोऽगस्त्य एव च । गोतमश्च भरद्वाजः एते चान्ये सशिष्यकाः ॥३५॥ राजानः पुण्यशीलाश्च यज्वानो मृष्टकुण्डलाः । इक्ष्वाकुप्रमुखाश्चैव पुरूरवमुखास्तथा ॥ सूर्यसोमान्वयोद्भूता राजसूयाश्वमेधिनः । एते सर्वे समाजग्मुः श्मशानमतिदारुणम् ॥ मार्कण्डेय उवाच— दृष्ट्वा देवगणान् सर्वान् ब्रह्मविष्ण्वीशमुख्यकान् । सखड्गोद्धृतहस्तश्च गृहीतगृहिणीकचः ॥ भीतिविस्मयहृष्टोऽभूत्त्रिशङ्कुतनयो नृपः । किं निमित्तमिमं देशं देवास्सर्वे समागताः ॥ इत्याश्चर्यविचारेऽभूत्स राजा धर्मनन्दन । ततःपितामहस्साक्षाद्वेदैर्भारतपश्च्रमैः ॥४०॥ मूर्तिमद्भिःषडङ्गैश्च स्मृतिभिश्चाध्वरैरपि । वेष्टितस्तं समासाद्य हरिश्चन्द्रं नरेश्वरम् ॥ आच्छिद्य खड्गं तद्धस्तान्मोचयामास भामिनीम् । ब्रह्माणमब्रवीद्राजा विस्मयाविष्टमानसः । कृताञ्जलिपुटो भूत्वा विनयानतकन्धरः । केशाऽस्थिविपुलं घोरं सर्वप्राणिभयावहम् ॥ भीमं शिवाऽशिवारावं गृध्रकाकबकाकुलम् । शिरःकपालसङ्कीर्णं चर्मखंडसमन्वितम् ॥ रक्तौघसिक्तं दुर्गन्धं शूलप्रोतशवाकुलम् । भस्मास्थिशकलैश्छन्नं करोटिशकलाकुलम् ॥४५॥ चितिभिश्चितिकाष्ठैश्च प्रेतमाल्यानुलेपनैः । मांसाशिप्रेतवेतालडाकिनीभूतराक्षसैः ॥ एवमादिमहाघोरैः श्मशानमतिदारुणम् । किमर्थमागता यूयमेकैको लोक-

पूजितः। सर्वलोकगुरुर्देवः श्मशाने किमिहागतः॥ ब्रह्मोवाच—नैतत्श्मशानं राजेन्द्र यज्ञभूमिरियं शुभा। नैते शूलाश्च यूपास्ते सकलापाः शुभावहाः॥ नैतान्यत्राणि तास्सर्वाः रशनादर्भनिर्मिताः। नैते केशा महाराज दर्भाः प्रागग्रविस्तृताः॥ नैते रक्तप्रवाहाश्च वह्नयो ज्वलिता इमे। नैतानि मांसखण्डानि पुरोडाशाः सुरप्रियाः॥५०॥ नैतानि चर्मखण्डानि राजन् कृष्णाजिनानि च। नैतेऽस्थिशकला राजन् लाजा शालिवनोद्भवाः॥ नैतेऽस्थिनिचया राजन् कपाला हि यतो हविः। नैते करोटयः शुभ्राः मदन्त्यः समुदाहृताः॥ नैते मांसाशिनो भूताः सदस्याः शास्त्रकोविदाः। न प्रेतचितयस्त्वेताः गरुत्मच्चितयस्स्मृताः॥ नैते शिवारवाघोराः सुब्राह्मणरवास्मृता। गृध्रकाकबकानैते ऋत्विजः श्रौतकोविदाः॥ नैतानि चितिकाष्ठानि दश यज्ञायुधानि च। सूक्ष्मास्थिशकला नैव शर्कराः सिकतास्तथा॥५५॥ नैतानि निम्नस्थानानि चषालानि नृपोत्तम। नोन्नतान्यत्र चैतानि शुभाह्युत्तरवेदयः॥ एवमादीनि चान्यत्र सर्वाण्येतानि भूपते। सर्वाण्येतानि जानीहि यज्ञीयानि न संशयः॥ द्वादशाब्देन यज्ञेन नाम्ना सत्यव्रतेन च। अत्रेष्टं भवता राजन् तेन तुष्टास्सुरर्षभाः॥ अनेन सत्ययज्ञेन दयया दक्षिणावता। परितुष्टाः स्म राजेन्द्र वयं हरिहरादयः॥ सन्देहमखिलं त्यक्त्वा मयोक्तेष्वखिलेषु च। मदुक्तं नान्यथा भूयात्पश्य सर्वं च याज्ञिकम्॥६०॥ मार्कण्डेय उवाच— इत्युक्तो ब्रह्मणा राजा दृष्ट्वा सर्वं च याज्ञिकम्। प्रमोदादतिसंहृष्टो विस्मयाऽनिमिषक्षणः॥ अथ ब्रह्मा हरो विष्णुः अन्ये च सुरसत्तमाः। हस्ते गृहीत्वा राजानं वरयेति वरं जगुः॥ सत्यव्रताभिधानस्य तव यज्ञस्य भूपते। सुस्नाताश्च वयं सर्वे ह्यद्यावभृथवासरे॥ अयं सत्यव्रतो यज्ञो देवर्षिपितृतृप्तिदः। किं बहूक्तेन वचसा यज्ञेनानेन तेऽनघ॥ चराचरात्मकं विश्वं सुप्रीतं भुवनेश्वर। तस्माद्वरय तेऽभीष्टं यत्तद्यदपि दुर्लभम्॥६५॥

॥ इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने त्रिंशोऽध्यायः॥

## एकत्रिंशोऽध्याय. ॥३१॥

मार्कण्डेय उवाच— इत्थमभ्युदितो देवैः कृतज्ञस्सर्वकार्यवित्। हरिश्चन्द्रोऽब्रवीद्देवान् कृताञ्जलिपरिग्रहः। हरिश्चन्द्र उवाच— नात्माधीनःसुरेन्द्राहं परवान् दास एवच। पराधीनस्य दासस्य नाधिकारस्सुरेश्वर॥ स्वामिनो मम देवेश वीरबाहोर्महात्मनः। आयुस्संतानवृद्धिस्स्यादाचन्द्रार्कं स जीवतात्॥ तस्मिन्मेस्त्वचला भक्तिरयमेव वरो मम। नान्यस्याहो नरस्याहं दासत्वं समुपागत'॥ मार्कण्डेय उवाच— दैवादागत्य चण्डालः कोपी किल नृपोत्तम। भवत्कृतोपकाराद्धि दासोऽहं ते भवाम्युत॥५॥ मूल्यप्रदानवेलायामित्युक्तं हि त्वया पुरा। अधुना तच्च विस्मृत्य गृहीत्वा मूल्यमेव च॥ महद्विपत्समुद्धारं दानं चावसरोचितम्। कृतज्ञतां च सत्यञ्च धर्मं चैवात्मनो हितम्। पुण्यश्लोकमति त्यक्त्वा कुतो गन्तुं त्वमिच्छसि॥ हरिश्चन्द्र उवाच— सत्यं च तव दासोऽहं जन्मायुतशतेष्वपि। न विस्मृतं मया किंचित् तत्त्वयोपकृतेष्वपि॥ दासस्तवाहमित्युक्त्वा गृहीत्वा च धनं बहु। विश्वासयित्वा भर्तारं पश्चात्त्यक्त्वा तु यो व्रजेत्॥ नास्ति तत्सदृशो लोके पापसञ्चयवान्नरः। युगकोटिसहस्राणि कल्पकोटिशतानि च॥१०॥ नरकेषु स पच्येत परवञ्चनपापकृत्। एते मे त्रिदशाः कुर्युः किं भवानिव मत्पिता॥ देवानां वैभवात् श्रैष्ठ्यात् पूज्यत्वादखिलस्य च। अभ्युत्थानाभिवादाभ्यामुपसत्तिः कृता मया॥ देवैर्दत्तश्च सुप्रीतैर्ब्रह्मविष्णुपुरोगमैः। तव दासतया तात न गृहीतो मया वरः॥ पुरा दुरभिमानेन मया ते पादपल्लवौ। संवाहितौ न प्रवरौ ताविदानी गुरू मम॥ संवाह्य पादपद्मं ते यास्यामि परमां गतिम्। भवान् पिता च माता च गुरुस्सर्वं च मे भवान्। किं बहूक्तेन मे तात भवान्मोक्षगतिर्मम॥१५॥ मार्कण्डेय उवाच— इति संवदतस्तस्य हरिश्चन्द्रस्य भूपतेः। पुरो रराज चण्डालः कोटिसूर्यमरीचिमान्॥ दृष्ट्वा तमद्भुतं देवं द्योतयन्तं जगद्रुचा। विस्मया-

दनिमेषाक्षं धर्मो व्याहर्तुमारभत् ॥ धर्मं मा विद्धि धर्मार्थकाममोक्ष-चतुष्टयम् । अहिंसादिदशाङ्गं च दयासत्यविलोचनम् ॥ इष्टापूर्त-करद्वन्द्वं दर्शराकाश्रुतिद्वयम् । चातुर्मास्योत्तमाङ्गं च पशुबन्धशिरो-धरम् ॥ इष्टिभिश्चाग्निहोत्रेण सर्वावयवसुन्दरम् । धर्मोऽहमस्मि भद्रं ते नोचेत्तावद्धनं महत् ॥२०॥ हस्ते दास्यति धर्मात्मन्नेकस्मिन्वासरे हि कः । पुरा यदा सुधर्मायां विश्वामित्रवसिष्ठयोः ॥ त्वन्निमित्तं विवादोऽभूत्त्वत्सत्यकथनं प्रति । तदाऽहं निन्दितं कृत्वा चण्डालं विदितं वपुः ॥ भवत्सत्यपरीक्षार्थमत्रकाश्यां पुराऽऽगतः । मामुपा-स्याखिला लोके सत्पुत्रं लेभिरे सदा ॥ कामहं देवतामिष्ट्वा भवन्तं पुत्रमाप्तवान् । वत्स त्वय्यास्पदं लब्ध्वा सत्यं लोकेऽनिरास्पदम् ॥ त्वया राजन्नसत्यस्य वासनाऽपि न सेविता । तव सर्वं मनोभीष्टं मुनि-र्दास्यति कौशिकः ॥२५॥ मार्कण्डेय उवाच एवमुक्त्वा तिरोधत्त धर्मो राजन् त्रिशङ्कुजम् । मिषतो राजसिंहस्य मिषतां च दिवौ-कसाम् ॥ एतस्मिन्नन्तरे राजन् विश्वामित्रो महातपाः । क्षीरार्णवा-चिरोद्भूतपूर्णचन्द्रनिभाकृति ॥ सुप्रसन्नाननःश्रीमान् तपसा ब्रह्मणा समः । यःपूर्वं क्षत्रियो भूत्वा तपसा ब्राह्मणोऽभवत् ॥ सोऽभिगम्य महाराजं सत्यव्रतपरायणम् । करे गृहीत्वा राजानं पश्यन् तन्मुख-पङ्कजम् ॥ दुग्धाब्धिसद्यस्संभूतसुधाधारामुचा दृशा । प्रववर्ष सुधा-वृष्टिं प्राक्दुःखक्लान्तभूपतौ । गृहीत्वाऽनंतरं वृष्टिं क्लान्तसस्यमिवा भवत् ॥३०॥ विश्वामित्र उवाच— राजन् शृणु पुरावृत्तं सुधर्मा-परिषद्भवम् । ऋषिप्रख्यातभूपालसद्वृत्तान्तसमुद्भवम् ॥ योऽजनिष्ट-पुरा विष्णुनाभिपङ्कजजन्मनः । ब्रह्मणः प्रथमः पुत्रो वसिष्ठो वशि-नां वरः ॥ यद्वाक्स्फुरणमात्रेण ब्राह्मण्यं प्राप्तवानहं । तस्य वै ऋषि-मुख्यस्य मम चैव नराधिप ॥ विवादोऽभूत्तदा तत्र त्वत्सत्यवचनं प्रति। सत्यप्रतिज्ञतायास्ते जिज्ञासार्थं मया नृप ॥ कृता मया प्रतिज्ञेयं क्रतु-भुक्सार्थसन्निधौ । त्वन्मनःपरिशोधार्थं क्लेशितस्त्वं मया पुरा ॥३५॥

द्वादशैतानि वर्षाणि क्लेशितोऽसीति यन्मया । प्रीत्यैव त्वयि तत्सर्वं न द्वेषान्न च वैरतः ॥ यदा दावानलाद्घोराद्भीतोऽसि त्वं वनान्तरे । अहं ते त्रातवान्पत्नी ससुतां कालकौशिकः ॥ दष्टो मयैव ते पुत्रः सर्पो भूत्वा वने निशि । क्लेशिता तव भार्येयं चोरो भूत्वा तथा निशि ॥ यदा यत्र च यद्दुःखमनुभूत त्वयाऽनघ । तदा तत्र च तद्दुःखं मयैवोत्पादितं त्वयि । सर्वमेतत्प्रियार्थं ते सत्यसंस्थापनाय च ॥ मार्कण्डेय उवाच— उक्त्वैवं नृपतेर्योगी दयापूरप्रवाहया । दृष्ट्यैवाथ च तत्पत्नी पूर्ववच्चाकरोन्नृप ॥४०॥ आस्फाल्य पाणिना पुत्रं लोहिताश्वमजीवयत् । रराज पूर्ववत्सोऽपि शंबराररिवापरः ॥ हैमं सिंहासनं दिव्यं सूर्यायुतसमप्रभम् । आनीय योगसत्वेन स्थापयित्वा नृपोत्तमम् ॥ लोहिताश्वं तदुत्सङ्गे पार्श्वे चन्द्रवतीं प्रियाम् । सन्नि-वेश्य सुरैस्सार्धमभिषेक्तुं प्रचक्रमे ॥४३॥

इतिश्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने एकत्रिंशोऽध्यायः ॥

## द्वात्रिंशोऽध्यायः ॥३२॥

मार्कण्डेय उवाच— ब्रह्मशम्भुरमाकान्ताः वाण्युमाकमला-न्विताः । विश्वामित्रवसिष्ठाद्याः सपत्नीकास्सुरास्तथा ॥ अन्ये देव-गणास्सर्वे ऋतवःषट् समागताः । कुम्भानादाय सौवर्णानेकैकश्च पृथ-क्पृथक् ॥ आनीय पुण्यवारीणि पुण्यतीर्थेभ्य एव च । बद्ध्वा ललाटे वैयाघ्रं सर्वरत्नपरिष्कृतम् ॥ होमवन्मन्त्रवच्चैव विधिवद्धर्षपूरि-ताः । अभिषिच्य सपत्नीकं सपुत्रं भूपमादरात् ॥ देवाश्च ऋषयश्चैव आयुरस्मै पृथक्पृथक् । अददुर्वर्षमेकैकमथादाद्गाधिनन्दनः ॥५॥ तद्धनं पृथिवी चैव जयां च विजयां तथा । राजा न प्रतिगृह्णाति दत्तापहृतिशङ्कया ॥ वसिष्ठोऽपि समागत्य हरिश्चन्द्रमभाषत । त्वं राजन् प्रतिगृह्णीष्व विश्वामित्रप्रयोजिताम् ॥ प्रत्याख्यानं न कर्तव्य-मृषिरेष महातपाः । श्रुत्वा गुरुवचो राजा प्रत्यगृह्णान्महीं धनम् ॥ न कन्यकेन्त्यजा भीत्या विश्वामित्रोऽब्रवीन्नृपम् । प्रतिगृह्णीष्व भूपाल

नैते चण्डालसंभवे॥ बलाचातिबला चेति द्वे विद्ये लोकविश्रुते। यस्यै-
ते लोकविख्याते ब्राह्मणस्य नृपस्य वा ॥१०॥ सप्तद्वीपार्णवा पृथ्वी
तस्य तिष्ठेद्वशे नृप। विधायैते मया पूर्वं विद्ये चण्डालसंभवे॥ भवन्मनः
परीक्षार्थं जयाविजयसंज्ञया। क्षुत्पिपासापरिश्रान्तिरालस्यं जडता
तथा। भयशोकमनस्तापाः न भवेयुः कदाचन॥ मार्कण्डेय उवाच—
विश्वामित्रवचः श्रुत्वा हरिश्चन्द्रो दयानिधिः। प्रक्षाल्य पादावाचम्य
मुनिं तमभिवाद्य च। उपसृत्य च तत्पादौ विद्ये द्वे लब्धवान्नृपः।
विश्वामित्राद्विनिर्गत्य मूर्तिमत्यौ नृपोत्तम॥ जयन्त्यौ वयसा रूपं
हरिश्चन्द्रस्य रूपतः। विस्मापयन्त्यौ राजानं भूपं विविशतुश्च ते॥१५॥
पुनर्गाधिसुतो धीमानवोचन्नृपसत्तमम्। बद्धाञ्जलिपुटं सम्यग्भक्ति-
प्रवणचेतसम्॥ तपस्तप्तं मया पूर्वं पञ्चाशत्कोटिवत्सरम्। तप्तेन
तपसा भूप ब्रह्मलोकमवाप्नुहि॥ सुतेन भार्यया सार्धं भुक्त्वा भोगा-
न्महीतले। त्रिशत्कोटिसहस्राणि त्रिंशत्कोटिशतानि च॥ भवान्
राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति। अथ गाधिसुतं देवाः प्रशस्य
च पुनःपुनः॥ ब्रह्मरुद्रादयस्सर्वे पुष्पवर्षैरवाकिरन्। ततो देवाः
सगन्धर्वाः ऋषयश्च तपोधनाः॥२०॥ अभिषिच्य हरिश्चन्द्रं स्थापयित्वा
महासने स्थगितार्कपथाग्रं च सर्वरत्नविभूषितम्॥ शतबाहुपरी-
णाहं हेमोलूखलभूषितम्। दिव्यवस्त्रपरीधानं दिव्यमाल्यानुलेपनम्॥
कृत्वा यूपं महोच्छ्रायं पुरुहूतध्वजोपमम्। स्वनत्सु देववाद्येषु हृष्य-
त्स्वमरशाखिषु॥ जुह्वत्सु विप्रमुख्येषु भुञ्जानेषु द्विजेषु च। नृत्य-
मानेषु हृद्येषु सुरयोषिद्गणेषु च॥ गंधर्वेषु सुगायत्सु विद्याधरगणेषु
च। दशदिक्षु प्रवर्षत्सु नानाजलधरेषु च॥२५॥ यूपं च चख्नुस्सुप्री
ता ददुर्दानान्यऽनेकशः। नानाशिषः प्रयुञ्जाना राजानमिदमब्रुवन्।
किं तेऽभिलषितं भूप ह्यञ्जसा तद्वृणु प्रभो॥ हरिश्चन्द्र उवाच— भवत्प्र-
सादात्संप्राप्तं मया यदभिलाषितम्। तत्सर्वं विद्यते चान्यत्त्रिषु लोकेषु
दुर्लभम्॥ सर्वावस्थास्वपि सदा सर्वत्रैवास्तु मे सुराः। अचञ्चला-

मतिस्सत्ये जन्मायुतशतेष्वपि ॥ धर्मे दयायां दाने च ममास्तु मतिरुत्तमा । परोपकारकृत्येषु कर्मणा मनसा गिरा ॥ धैर्यमस्तुमतिश्चास्तु देहांतकरणेष्वपि । आलस्यं माऽस्तु मे नित्यं प्रजापालनकर्मसु ॥३०॥ ब्रह्मोवाच— तथैवास्तु तवाभीष्टं यद्यच्च त्वदभीप्सितम् । नंदंति भूमिभागास्ते येषां त्वमवनीपतिः ॥ प्रजाःपालय धर्मेण धर्मस्त्वामभिरक्षतु । मासत्रयं तु पर्जन्यो राज्ये वर्षतु वासवः ॥ देशस्ते क्षोभरहितः सस्यधान्यवती मही । निराधयो निरातङ्का रोगव्याधिविवर्जिताः ॥ दीर्घायुषो निरातङ्काः स्त्रियश्चाऽविधवा नृप । नाकालमृत्युर्भविता राज्ये तव नराधिप ॥३४॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने द्वात्रिंशोऽध्यायः

## त्रयस्त्रिंशोऽध्यायः ॥३३॥

मार्कण्डेय उवाच— आशीर्भिरभिनंद्यैनं राजानमृषयस्सुराः । अभिषिच्य ततो राज्ये गंतुमैच्छन् दिवं सुराः ॥ तानब्रवीन्महीपालस्स सुरान्सुमनाकृतिः । विनयावनतो भूत्वा कृताञ्जलिपरिग्रहः ॥ हरिश्चन्द्र उवाच— प्रसन्ना यदि मे यूयं वरं मे यदि दास्यथ । एकं वरं प्रदत्तं मे ममाभीष्टमतिप्रियम् ॥ एतद्वैरमियंस्पर्धा विश्वामित्रवसिष्ठयोः । माभूदितःपरं देवाः प्रीतिरस्त्वनयोःस्थिरा ॥ सुरा ऊचुः— दैवसिद्धं तयोर्वैरं कदाचिन्नापयास्यति तयोरस्तु त्वयि प्रीतिर्भक्तिश्चास्तु स्थिरा तव ॥५॥ एतस्मिन्नन्तरे राज्ञी हरिश्चन्द्रप्रिया सती । देवानृषींस्तर्पयन्ती सपत्न्याङ्कं प्रणम्य च ॥ तेषां पुरःस्थिता तूष्णी रचिताञ्जलिपङ्कजा । तामूचुस्ते च तास्सर्वाः प्रीताः प्रार्थनया नृप ॥ सपत्नीका सुरा ऊचुः— वाग्देवीव विधातारं गिरिजेव कपर्दिनम् । पद्मालयेव वैकुण्ठं छायेवच दिवाकरम् ॥ रोहिणीव निशाकान्तं लोपामुद्रेव कुंभजम् । नालायनीव मौद्गल्यं दमयंतीव नैषधम् ॥ औशीनरि महाभागे शीलाचारगुणैश्शुभैः तथा त्वमपि कल्याणि पतिप्रीतिकरा भव ॥१०॥ विश्वामित्र उवाच— सत्येन निर्जिता लोका

आब्रह्मभुवनानि च । तेषु भुक्त्वा तु विपुलान्भोगान् दिव्यानशेषतः ॥ लोहिताश्वं सुतं राज्ये स्थापयित्वा कलानिधिम् । सपत्नीमंत्रिपुत्रश्च प्राप्नुहि ब्रह्मण पदम् ॥ ब्रह्मा विष्णुश्च रुद्रश्च लोकपालास्सहामरै । ऋषिभिस्सिद्धगंधर्वैस्साप्सरोगणकिन्नरैः ॥ आशिभिरभिनन्द्याथ स्वस्ति वाच्य पुनःपुनः । ऋषिदेवगणास्सर्वे प्रतिजग्मुर्यथागतम् ॥ विश्वामित्रो वसिष्ठश्च वर्धयित्वा नृपोत्तमम् । आशीर्भिर्जग्मतुश्चैव यथागतमथो नृप ॥१५॥ काशीं प्रदक्षिणीकृत्य विश्वनाथं प्रपूज्य च । अक्षौहिणीनां विंशत्या सेनया स समावृतः ॥ सेनारजोनिकायेन वायुवेगविसर्पिणा । कुर्वन्नभस्स्थलं भूमिं भूमिश्चापि नभस्स्थलम् ॥ सर्ववाद्यस्वनेनापि वीणावेणुस्वनैःशुभैः । गीतस्तोत्ररवैश्चापि सूतमागधवन्दिनाम् ॥ महता पुष्पवर्षेण लाजवर्षेण चाक्षतैः । छत्रेण ध्रियमाणेन राजसूयाभिशोभिना ॥ तालवृंतैर्वीज्यमानो धूयमानस्सचामरैः । नीराजमानो योषिद्भिरारार्तिकविदीपकैः ॥२०॥ आशास्यमानो विप्रौघैःप्रत्युद्यातश्च नागरैः । प्रविवेश पुरीं राजा सर्वालङ्कारशोभिताम् ॥ हृष्टपुष्टजनाकीर्णां पुरन्दरपुरीमिव । अतोषयज्जनं पौरं सभाषणविलोकनैः ॥ आलिङ्गननमस्कारैर्यथाजाति यथाक्रमम् । यथायोगं यथायोग्यं यथा वैशिष्ट्यमेव च । प्रविश्य स्वगृहं राजा स्वांतःपुरमतोषयत् ॥ मार्कण्डेय उवाच— हरिश्चन्द्रमहीपालः सप्तद्वीपैकपालकः । तावद्वीपार्णवामुर्वीं शशासैकपुरीमिव ॥ राजसूयाश्वमेधादियज्ञैरीजे सुदक्षिणैः । वित्तं ब्राह्मणसात्कृत्वा विस्तार्यं च जगद्यशः ॥२५॥ मोदयित्वा सुरान्यज्ञैर्दानैर्ब्राह्मणसत्तमान् । अनाथबालवृद्धांधान् मृष्टान्नैरमृतोपमै ॥ एवं जगत्प्रीणयित्वा सत्यशीलो महीपतिः । त्रिंशत्कोटिसहस्राणि त्रिंशत्कोटिशतानि च ॥ पालयित्वा महीं कृत्स्नां स्थापयित्वा यशो भुवि । जगाम ब्रह्मभवनं मंत्रिभार्यासुतैस्सह ॥ कल्पमेकमुषित्वाऽथ वैकुंठे च शिवालये । कल्पं कल्पमुषित्वाऽथ मेरोरुत्तरतःक्षितौ ॥ धर्मनाभिनृपो भूत्वा युगो-

ात्मानमात्मनि । एवमेतन्महीपाल हरिश्चन्द्रेण भूभुजा ॥३०॥
खं महत्तरं प्राप्तं दुरंतं दुस्सहं भुवि । अंते च प्राप्तवान् शंभोस्सा-
ज्यं धर्मनन्दन ॥ इदं यशस्यमायुष्यं शत्रुघ्नं कीर्तिवर्धनम् । शांति-
ष्टिकरं पुण्यं पापघ्नं धर्मनन्दन ॥ पठतां शृण्वतां नृणामायुस्सत्वफल-
दम् । आरोग्यसुखदं नित्यं दुःखशोकविनाशनम् ॥ दारिद्र्य-
ाशनं नृणां महासंपत्प्रदायकम् । देहेन्द्रियमनोबुद्धिस्वास्थ्यद सर्व
ौख्यदम् ॥ अस्पृश्यस्पर्शदोषघ्नं चण्डालस्पर्शनाशनम् । महापापहर
्रामिगुरुद्रोहाघनाशनम् ॥३५॥ य इदं शृणुयान्नित्यं पठेद्वा श्रद्ध-
ान्वितः । सर्वसिद्धिमवाप्नोति यद्यदिच्छति भूमिप ॥ कीर्त्यर्थी
ीर्तिमाप्नोति सुखार्थी सुखमाप्नुयात् । भार्यार्थी लभते भार्यां गुण-
ीलसमन्वितनाम् ॥ बालवैधव्यदुःखार्ता शृणुयात्पुण्यमुत्तमम् ।
प्तजन्मनि भर्तारमायुष्मंतं पतिं लभेत् ॥ वियुक्तपुत्रा या नारी
ोग्यं पुत्रं समाप्नुयात् । चण्डालसूतिकोदक्यापातितस्पर्शभाषणे ॥
रिश्चन्द्र हरिश्चन्द्र हरिश्चन्द्रेति कीर्तयेत् । हरिश्चन्द्रं स्मरेन्नित्य
प्रातरुत्थाय मानवः ॥४०॥ सुदिनं सुप्रभातञ्च मङ्गलं तस्य जायते ।
शृणुयाद्रजस्वला नारी शीघ्रं सा गर्भिणी भवेत् ॥ गर्भिणी जनयेत्पुत्रं
सर्ववेदान्तपारगम् । एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥
सत्यवादिहरिश्चन्द्रवृत्तान्त प्रति भूमिप । हरिश्चन्द्रकथा पुण्या गङ्गेवाऽ
घविनाशिनी । स्नातानां शृण्वताञ्चैव समन्तात्पुण्यवर्धिनी ॥४३॥

इति श्रीमन्महाभारते वनपर्वणि हरिश्चन्द्रोपाख्याने त्रयस्त्रिंशोऽध्यायः ॥

॥ इति श्रीमन्महाभारतवनपर्वान्तर्गतहरिश्चन्द्रोपाख्यानम् संपूर्णम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ शुभं भूयात् ॥



॥ श्रीः ॥

# ॥ हरिश्चन्द्रोपाख्यानस्थदुर्घटपदार्थविवरणम् ॥

१. अग्निब्राह्मणपूजकः। २. यमसमः। ३. क्रतून् जयति करोोति क्रतुजित्। ४. नर्तनेनोपचर्यमाणे इन्द्रे इति शेषः। ५. हरिान्द्रे मुनिभिः शस्यमाने वसिष्ठेन स्तूयमाने च सति। ६. दृष्ट इति ाकुः दृष्टः किं न दृष्टः। ७. एकच्छत्रः। ८. मनुष्यमानेन। .. यत्त्वया दृष्टं त्रैकालिकं समदृष्टे चतुर्थांशोऽपि न। १० प्रशास्ति। '१. सन्धिरार्षः। १२. ल्यब्लोपनिमित्ता पञ्चमी। लाभमुद्दिश्य ा। १३. लोलुपः। १४. कदाऽपि। १५. हरिश्चन्द्रस्य सत्याचनं प्रति। १६. न श्रोतव्यं च। १७. जन्मान्तरेऽपि। १८. हे युधिष्ठिर। १९. ज्ञात्वा। २०. त्वां वियुक्तं कुर्यादिति शेषः। २१ पालयन् आस। २२. एकादशकोटिव्याघ्रानिति ग्रन्थांतरे। २३. स्थापनाय प्रयत्नं चकार। *गृद्ध्रः उपविवेशेति शेषः। २४. हृतौ। २५. ज्ञात्वा। २६. अमात्योऽपि। २७. सन्तोषकारकम्। २८. सारिकाभिः। २९. कुञ्जरः हस्तिशिशुः उत्सङ्गसंस्थितः सिह्याः इति शेषः। सन्धिरार्षः। ३०. न गन्तव्यमित्युक्तः। ३१. वाञ्छायाः सकाशात् मे जिह्वायाम्। ३२. कृते इति शेषः। ३३. कर्म। ३४. भोक्तव्यम्। ३५. आक्रान्ता सुप्वापेति च शेषः। ३६. भ्रान्ता। ३७. त्वत् = त्वया। ३८. मृगात् हरिणात् संभूतः शशः। हरिणात् विजातीयशशोत्पत्तिर्यद्वदसंभाविता तद्वत् तव भयमसंभावितम्। ३९. भोक्तुं प्रसक्तम्। *अहमिति शेषः। ४०. वृक्षैः। ४१. श्रमः दृष्टः अनुभूतः येन तेन त्वयाऽनुभूयमानं दुःखम्। ४२. प्रीतिम्। * राज्ञस्समीपे। ४३. संभूताइति शेषः। ४४. आगत्येति शेषः। ४५. संबोधनद्विवचनम्। ४६. चण्डालवपुष्मत्यौ। ४७ अडभावश्छान्दसः। ४८. निश्चयेन। ४९. नौ प्रार्थितमिति च शेषः। ५०. दर्शने। ५१. खिन्नेषु। ५२. देवाः।

५३. शापे दत्ते = दूषणे कृते । ५४. श्रीमन्महाभारते आनु० प० अ० २६४. श्लो०. ४४. T R K Edition । ५५. न दन्तः श्रीकुंभघोणमाहात्म्ये अ०-४३ । ५६. बद्धइति शेषः । ५७. निः आ अपराधी इति पदच्छेदः । ५८. ऊर्ध्वमिति शेषः । ५९. पक्षी । ६०. उरूणि दामानि तुलसीमणिहारादीनि यस्य तम् । ६१. श्रीमद्वाल्मीकिरामायणे बालका०स०-२६-श्लो० २६. । ६२. श्रीमद्वा०रा० बा०स०२५ श्लो२० ६३. श्रीमद्वा०रा०सुन्दरका० स-१-श्लो-१९६ । *शृङ्खलया । ६४. विचिन्त्य । ६५. स्पर्धाजामिति वक्तव्ये स्पर्धजामिति छांदसो ह्रस्वः। वसिष्ठद्वेषजामिति वा पाठः *मत्पितरं त्रिशङ्कुम् । *हननतुल्यं चण्डालत्वं प्रापयित्वा । *आर्षः । ६६. केन कर्मणा पुनर्भूमौ त्वं जनिष्यसे ६७. नरकहेतुम् । ६८. अनुभवत इति शेषः । ६९. त्याज्याविति शेषः। ७०. छत्रं = छत्रोपलक्षितराज्याशां । क्षात्रं = क्षत्रियस्वभावम् । ७१. भवेदिति शेषः । ७२. मयेति शेषः । ७३. स्वर्णदइति कस्यचिद्राज्ञो नाम । ७४. तस्य सदृशः स एव नान्यः । *विश्वामित्रेण । ७५. शोभमानान् । ७६. विलसतः । ७७. आत्मानमिति शेषः । ७८. उर्वी च गृहाण । ७९. पादचारेण । ८०. शिक्षते = यतिप्रभृतीनां शिक्षकस्य स्वर्गो न भवति । ८१. धर्माचारमार्गलोपभयात् । ८२. कारयतीति शेषः । ८३. स्वान्यस्य कर्तुः फलं ततोऽन्यस्य स्वस्य न । ८४. आदरार्थोऽभ्यासः । ८५. न भवाम्यहमिति काकुः । ८६. वेगं सोढुमिति शेषः । ८७. अस्ति किं नास्तीत्यर्थः । ८८. प्रवृत्त इति शेषः । ८९. आर्षो ङीप् । ९०. एतस्यास्समा अधिका च नास्ति । ९१. सा = संपत् । ९२. भीतिः । ९३. स्थितं त्वामिति शेषः । ९४. ददातीति शेषः । ९५. कर्मणेति शेषः । ९६. कंचन । ९७. विश्वामित्रः । ९८. अग्निं । ९९. विघ्नं चकारेति पूर्वेणान्वयः । १००. आगतम् । १०१. मम शरीरमिति शेषः । *उपदिशति । १०२. राममंत्रम् । १०३. जीवो

(वनं) वन्ध्यो येषां तैः स्वच्छन्दमृत्युभिः। १०४. मोचयेति
ः। १०५. च शब्देन मंत्रिणा चेत्यर्थः। १०६. बलेन उत्तरं
कृष्टम्। १०७. जनाः। *अर्धोऽयं श्लोकः। १०८. तिष्ठाव
मे शेषः। *त्वमन्यामिति च शेषः। १०९. सृष्टः कृतः।
१०. वीथ्यां स्थापयित्वा। १११. ब्राह्मणाय। ११२. मम।
१३. ध्यात्वा। ११४. निर्दोषपितृमातृका। *भर्तृबंधुवर्गः।
१५. संबोधनम्। ११६. संबोधनम्। ११७. उवाचेति शेषः।
१८. जन्मान्तरे इति शेषः। ११९. विक्रीय स्थितः। १२०. ममेति
द्गतिरिति च शेषः। मम पित्रादीनां सद्गतिरित्यन्वयः।
२१. मज्जनमिव। १२२. अडभावश्छान्दसः। १२३. प्रदर्शया-
सेत्यर्थः। १२४ दुश्चर्मा। *स्थूलनाडीकः। १२५. ते
प्सितमिति च्छेदः। १२६. दण्डनस्येति शेषः। *शूद्रेष्वित्यर्थः।
२७. पुण्यादिति शेषः। १२८. सत्यवचनजन्यं पुण्यं कर्तृ पुरुषं
जेत्। १२९. ते=त्वया दीयतामिति शेषः। १३०. दत्वा।
३१. उवाचेति शेषः। १३२. खस्थः उवाच। १३३. मह्यम्।
३४. त्रिशंकुशब्दस्य तत्पुत्रे लक्षणा। १३५. राज्ञः उत्संगे।
हन्ति। १३६. प्राप्नुयामिति शेषः। *छान्दसो दीर्घः।
३७ नदीतीरे। १३८. वधार्हपापकृतः। १३९. संहार्याः।
४०. ययाविति शेषः। १४१. अन्यच्छ्रोतुं मनो न नीयते।
४२. अब्दो मेघः। १४३. तां कथां शृण्विति पूर्वेणान्वयः।
४४. धर्मिणः पापिनः अश्वादीन् आहारादिना पापिनः अश्वादयः
र्मिणः अश्वारोहादीन् सुखं प्रापयंति। १४५. यदि नाचरेत्तर्हि-
युत्तरेणान्वयः। १४६. श्रवणात्। *कलौ हिंसैवेति भावः।
४७. उद्भिज्जादिभेदेन। १४८ त्रीण्यपि चौर्याणीत्यर्थः।
४९. डंभार्थं कर्म। *स्वानुष्ठानं विना धर्मोपदेशः। १५०. जित-
क्रोधः। १५१. क्रोधरहितेषु। १५२. स्वसमेन। १५३. वसन्निति

शेषः । *कालविशेषे । १५४. कथयेति शेषः । १५५. संयोज्य । १५६. विद्युदिव *मुक्ताभिः = मुक्ताफलसदृशदन्तैः। १५७. भुवि। १५८. मोक्ता । १५९. पादाविति शेषः । १६०. भावप्रधानो निर्देशः चण्डालत्वम् । *मम पितृऋणं त्वया संक्रामितं = परिहृतम् । १६१. इतः उपरि इतिच्छेदः ।१६२ संबोधनम् । १६३. निक्षिप्य। *सप्तम्यर्थे द्वितीया । १६४. कर्मानुगुणम् । *आर्षो दीर्घः । *प्रेषितेति शेषः । *जागर्ति । *सन्धिरार्षः *विश्वे=विश्वेदेवाः १६५. ईशाः=दिगीशाः । १६६. भीतिविस्मयाभ्यां सह हृष्टोऽभूत्। १६७. मत्पिताऽपि कुर्यात्किं अथवा मत्पिता भवानिव । १६८. न संवाहिताविति संबन्धः। *आर्षः। १६९. तिरोदधे। १७०. अहमेवेति शेषः । १७१. पृथ्वीमिति शेषः । १७२. प्रेषिते इति शेषः । १७३. देहान्तकारिष्वपि शत्रुष्वपि मे मतिरस्तु । १७४. प्रयच्छत । १७५. जगत=जगति ।

॥ इति श्रीहरिश्चन्द्रोपाख्यानस्थदुर्घटपदार्थविवरणं समाप्तम् ॥



## ॥ शुद्धिपत्रिका ॥

| पृ. | पं. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ३. | २४. | कुज. | कुश. |
| ५. | १. | ख्याता. | ख्याताः. |
| ५. | ११. | तभ्या. | ताभ्या. |
| ६. | १७. | दुःष्प्र. | दुष्प्र. |
| ७. | २०. | बे. | वे. |
| ९. | १३. | मृगे. | हारितौ. |
| ,, | २१. | पैत्रीभाव. | मनुज्ञाय. |
| १०. | २२. | मज्ञ. | मज्ज. |
| १३. | १७. | त्करि. | द्भवि. |
| १५. | ३. | या नि. | याऽनि. |
| ,, | १२. | कुंम. | भौमैः |
| १६. | १. | यान. | याऽन. |
| १८. | | अ० ६.] | अ० ७.] |
| १९. | २४. | दृष्टे. | दृष्टे. |
| २०. | २६. | यद्दखं. | यद्दुःखं. |
| २१. | २. | मान्य. | माऽन्य. |
| २२. | १६. | शौपे. | शौपे. |
| ,, | १७. | भृगवे. | दत्तः कि. |
| २४. | १. | ङ्त्या. | ङ्क्त्या. |
| ३२. | ८. | यान. | याऽन. |
| ३८. | ९. | दौस. | न भवाम्यहं. |
| ३९. | ९. | नर्तपर्वणां. | शर्राणां. |
| ४०. | ४. | वैडूर्य. | वैदूर्य. |
| ४२. | ५. | मौ. | भीः. |
| ४३. | २. | मोक्षकान् | मोक्षकान्. |
| ,, | २५. | माल. | माला. |
| ४५. | ७. | आत्मानं. | भूत्वा. |
| ४५ | २२. | मानाय. | मानाया. |
| ५१. | ,, | अ० १८] | अ० १९] |
| ५२. | २. | ष्यसि. | ष्यति. |
| ५३. | १९. | भार्या. | [२०.लोकाः |
| ५६. | ९. | भानु. | देवाः. |
| ,, | २१. | जछा. | जच्छा. |
| ,, | २६. | विक्राय. | विक्रीय. |
| ५८. | ७. | पंश्व. | पश्व. |
| ,, | १३. | थेछं. | थेच्छं. |
| ,, | १७. | ञ्त्र्यं. | ञ्त्र्यं. |
| ६१. | ५. | सुताय. | ते. |
| ,, | १२. | आगच्छ. | मामिति. |
| ६२. | ५. | क्तास्म्य. | क्ताऽस्म्य. |
| ६४. | — | [अ० २०. | [अ० २३. |
| ,, | २२. | १३८. | १३७. |
| ६५. | ४. | ग्रास्त्रि. | ग्राःस्त्रि. |
| ६६. | १४. | वर्हन्ति. | सुखयन्ति. |
| ६८. | ५. | स्तेना. | स्तेया. |
| ,, | ६. | स्तेना. | स्तेया. |
| ६९. | १८. | दम्भ स्या. | दम्भः स्या. |
| ७१. | २५. | सुकुमारस्य. | वर्तनम्. |
| ७२. | ४. | मिपु. | मित्पु. |
| ,, | ११. | यदुः. | यद्दुः. |
| ७६. | २१. | पतिता. | अग्रहीत्. |
| ९०. | १८. | दुग्धाग्धि. | दुग्धाब्धि. |
| ९२. | २३. | न्यऽने. | न्यने. |
| ९५. | ९. | यान्वि. | याऽन्वि. |
| ,, | १८. | वाऽघ. | वाघ. |